KÂVYAMÂLÂ. 79.

THE

# KARṆA-BHÛSHAṆA

OF

## GANGÂNANDA.

EDITED

BY

PAṆḌIT BHAVADATTA S'ÂSTRÎ,
2nd Paṇḍit, Government College, Ajmer,
Son of
MAHÂMAHOPÂDHYÂYA PAṆḌIT S'IVADATTA,
Head Paṇḍit and Superintendent, Sanskṛit Department,
Oriental College, Lahore,

AND

KÂS'INÂTH PÂṆḌURANG PARAB,

REVISED BY

WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆS'ÎKAR.

Second Edition.

PUBLISHED
BY
PÂNDURANG JÂWAJÎ,
PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,
BOMBAY.

1926.

काव्यमाला. ७९.

श्रीगङ्गानन्दकविराजप्रणीतं

# कर्णभूषणम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारककेदारनाथ-
कृपाङ्गीकृतशोधनकर्मणा महामहोपाध्यायपण्डितशिवदत्तशर्म-
तनूजपण्डितभवदत्तशास्त्रिणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च संशोधितम् ।
तथा पणशीकरोपाह्वलक्ष्मणशर्मात्मज-
वासुदेवशर्मणा संस्कृतम्,

द्वितीयावृत्तिः ।

तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी

इत्येतैः स्वीये निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

१९२६.

मूल्यं १० आणकाः ।

श्रीमद्गङ्गानन्दकविराजप्रणीतं

## कर्णभूषणम्[1]।

प्रथमः परिच्छेदः।

कस्ते वक्षसि वारिराशिमथनोत्पन्नो मणिः कौस्तुभः
सोऽयं मत्सहजस्ततः सुतनु ते वासस्थले स्थापितः।
इत्थं व्याहरतोः परस्परमुखप्रेक्षानमन्नेत्रयो-
र्लक्ष्मीकैटभवैरिणोर्विहसितं त्वामापदस्त्रायताम्॥ १॥
अस्ति स्वस्तिवहाहशां निवसतिर्लक्ष्म्या भुवो भूषणं
**बीकानेरिपुरी** कुबेरनगरीसौभाग्यनिन्दाकरी।
कैलासाचलचारुभास्वरपृथुप्रासादपालिद्युति-
व्याजेनोपहसत्युपर्युपगतां या राजधानीं हरेः॥ २॥
तत्रास्ते धरणीपतिः पृथुयशाः **श्रीकर्ण** इत्याख्यया
गोविन्दाङ्घ्रियुगारविन्दविलसच्चित्तालिरत्युन्नतः।
राधेयभ्रममात्मनि त्रिजगतां चित्ते स्थिरीकुर्वता
दीयन्तेऽर्थिगणाय येन सततं हेमाश्वहस्त्यादयः॥ ३॥
आज्ञया तस्य भूमीन्दोर्न्यायकाव्यकलाविदः।
**गङ्गानन्द**कवीन्द्रेण क्रियते **कर्णभूषणम्**॥ ४॥

---

१. इमं ग्रन्थं **बीकानेर**धरामण्डलाधीश**वीकाजी**महाराजात्मज**श्रील्रूणकर्ण**महाराजनामैकदेश**श्रीकर्ण**महाराजो वैक्रमे १५६२–१५८३ (A. D. 1506–1527) वत्सरे **बीकानेर**महीमण्डलं मण्डयति सति **श्रीमद्गङ्गानन्द**कविराजद्वारा कारितवान्. ५६ पत्रात्मकं पुस्तकं चास्य ग्रन्थस्य **जयपुर**महाराजमन्त्रगुरुभट्ट**रूपदत्त**शर्मणां सरस्वतीसदनत उपलब्धम्.

नाहमभ्यर्थये तावदिह सज्जनदुर्जनौ।
तयोर्गुणागुणाख्यानं स्वभावो नापगच्छति ॥ ५ ॥
करोति श्रोत्रसाफल्यं यत्सुवर्णविनिर्मितम्।
तस्मिन्निह कृती **कर्णभूषणे** को न रज्यति ॥ ६ ॥

तत्र रसाः कथ्यन्ते—

**शृङ्गारहस्याकरुणरौद्रवीरभयानकाः।**
**बीभत्साद्भुतशान्ताख्या रसा नव समीरिताः ॥ १ ॥**

एषां रसानां मध्ये रसः **शृङ्गार** एव मुख्यत्वेन गीयते। तत्र श्लोकः—

'कृष्णाधिदैवते कृष्णे मुख्यकृष्णावलम्बने।
उत्तमप्रकृतौ लोके शृङ्गारे को न रज्यति ॥' इति।

सर्वात्मना कृष्णाधिष्ठितत्वेनाभ्यर्हितस्य शृङ्गाररसस्य निष्पादकजिज्ञासायां **विभावानुभावव्यभिचारिण** एव निरूप्या भवन्ति। तदुक्तं भरतेन—

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति।

तेषां च पुरःस्फूर्तिकतया **विभावा** निरूप्यन्ते—

**लोके कारणनामानो भावयन्ति विशेषतः।**
**ये रसान्ते(स्ते) निगदिता विभावाः काव्यनाट्ययोः ॥ २ ॥**

भावयन्ति आविर्भावयन्ति। आविर्भावस्तु विभावनरूपव्यापारद्वारैव।

**विभावनं तु बीजादिश्लथीभावाङ्कुरत्ववत्।**
**सामाजिकात्मरत्यादेरुन्मुखीकरणं विदुः ॥ ३ ॥**

विभावनं रत्यादेरुन्मुखीकरणमित्यन्वयः। दृष्टान्तमाह—बीजादीति। बीजादेः श्लथीभाववदङ्कुरत्वदशाप्राप्तिवदित्यर्थः।

**उद्दीपनालम्बनाख्या विभावा द्विविधा मताः।**

उद्दीपनाख्या आलम्बनाख्याः।

**उद्दीपनविभावास्ते ये रसोद्दीपका मताः ॥ ४ ॥**
**आलम्बनविभावास्ते यानालम्ब्य रसोद्गमः।**

अथ शृङ्गारस्योद्दीपनमाह—

**उद्दीपनं चञ्चरीकरवचन्द्रघनादिकम् ॥ ५ ॥**

आदिशब्दात्कोकिलालापमलयानिलादयः । एतेषामुद्दीपनानां मध्ये श्रेष्ठा भगवतः श्रीकृष्णस्य रासक्रीडाधाराः शरन्निशा उदाह्रियन्ते । यथा—

दृष्ट्वा निशां विकचकैरवशोभिताशां
　कृष्णः स्वयं शरदि रन्तुमना बभूव ।
आलोकितुं रमणमिन्दुमिषेण तस्य
　पूर्वा हरिद्वदनमुन्नमयांचकार ॥ ७ ॥

चन्द्रे रमावदनविभ्रममादधानः
　स्पर्शं तदीयतनुवत्सुखमिन्दुधाम्नः ।
संशील्य तत्र विपिने कमलाहितान्तः
　कृष्णो मनोभववशो रमणेच्छुरासीत् ॥ ८ ॥

आहृत्य गाढतिमिरावरणाम्बराणि
　दिक्सुभ्रुवामुदयभूमिधराधिरूढः ।
कृष्णं कदम्बशिखराभिगतं सुधांशु-
　रस्मानयन्निखिलवस्त्रहरं व्रजस्त्रीः ॥ ९ ॥

ये ये मुरारिविपिने न कदाचिदेव
　भूमीरुहाः प्रसुवते कुसुमानि तत्र ।
शीतद्युतेः किरणयोगवशेन दृष्टा-
　स्ते पुष्पिता इव कुलैर्व्रजसुन्दरीणाम् ॥ १० ॥

आकृष्य तत्र विपिने नवमल्लिकानां
　कोषाद्रजांसि मलयानिलकम्पितानाम् ।
चिक्षेप भृङ्गरवमन्त्रमुदीर्य दूरा-
　द्गोपीविमोहकरणाय करैरिवेन्दुः ॥ ११ ॥

तत्र क्षणे व्रजनिवासिविलासिनीभि-
　र्नाक्षत्रमौक्तिकगणावृतमण्डलश्रीः ।
जेतुं जगज्जिगमिषोर्मदनाधिपस्य
　श्वेतातपत्रमिव शीतकरो व्यलोकि ॥ १२ ॥

दूर्वाभिरामतनुकामनृपः कलङ्क-
व्याजेन शीतकिरणं पृथुलोपधानम्।
आलम्ब्य शास्ति जगदेतदिति व्यतर्कि
चित्ते तदा व्रजसरोजविलोचनाभिः॥ १३॥

श्वेतान्तरीयमिह किं विभुना व्यधायि
कृष्णेन योगपतिना निजवासहेतोः।
इत्थं वितर्कशतमाविरभूद्व्रजस्त्री-
वृन्दस्य तां शरदि वीक्ष्य निशां सचन्द्राम्॥ १४॥

आयातः किं विधुवलयिताहीशतल्पं गृहीत्वा
क्षीराम्भोधिर्मम परिसरे रन्तुकामस्य विष्णोः।
इत्थं तर्कः समजनि तदा मानसे श्रीमुरारे-
र्दृष्ट्वा शीतद्युतिरुचिचयव्याचिताकाशमुच्चैः॥ १५॥

इत्याद्युद्दीपनविभावाः।

शृङ्गाररस्यालम्बनविभावास्तु नायकनायिकादयस्तेषां मध्ये भगवान्कृष्णो गोप्यश्चाभ्यर्हितत्वेनाभिमताः। अतस्तदुदाहरणमेवोचितम्। यथा—

आलोक्य तां रजनिमिन्दुकराचिताशां
मन्दानिलोल्लसितमल्लिसुगन्धिसौम्याम्।
योगीश्वरोऽपि मदनेन वशीकृतान्त-
र्वंशीमवादयत गोपशशी स कृष्णः॥ १६॥

उद्गायतो यदुपतेरमृतस्वरेण
कामोऽपि लब्धवपुरास स रासहेतोः।
मन्ये तदा कुसुममार्गणगोपपत्यो-
रन्योन्यमेव वशवश्यकभाव आसीत्॥ १७॥

तत्र क्षणे भगवतो मधुरस्वरेण
चौरेण वेणुचिवरं विनिविश्य तेन।
चित्तं धनं भवनकृत्यपरायणानां
गोपारविन्ददलहारिदृशामहारि॥ १८॥

गोप्योऽपि तं मधुरवेणुनिनादमुच्चैः
　श्रुत्वा तदा मनसि विस्मृतसद्मकृत्याः ।
स्विद्यद्वपुःपुलकपालिपरीतगात्राः
　कृष्णस्य चारु चरितं ललितं जगुस्ताः ॥ १९ ॥

काश्चिद्विभिद्य पतिबद्धपुटं कपाटं
　कामोद्धुरा मधुरिपुं सहसाभिजग्मुः ।
भित्त्वा जनेन रचितं महतः प्रयत्ना-
　त्सेतुं समुद्रमिव तीव्रजवास्तटिन्यः ॥ २० ॥

वेणुस्वरे श्रवणसीम्नि गते स्मरार्ता
　काचित्तदा मुरजितः सविधं प्रतस्थे ।
मेघागमे जलधरस्य निनादमादा-
　वाकर्ण्य मानसमिव स्थलराजहंसी ॥ २१ ॥

कस्याश्चिदम्बुजविलोचनसंनिधानं
　तस्मिन्क्षणे जिगमिषोर्व्रजवारिजाक्ष्याः ।
दत्तः प्रियेण बहुशोऽपि हितोपदेशः
　कामेषुजर्जरतरे हृदये न तस्थौ ॥ २२ ॥

गाढं विभिन्नहृदया मदनाशुगेन
　काचित्तदा यदुपतेर्निकटं व्रजन्ती ।
प्रीत्यान्धतामुपगता व्रजवारिजाक्षी
　वात्येव मण्डलमितस्तत आततान ॥ २३ ॥

वंशीरवश्रवणकम्पितदेहयष्टेः
　कस्याश्चिदम्बुरुहसुन्दरलोचनायाः ।
अङ्कात्पपात तनयोऽल्पतनुर्लताया
　वृन्तान्नवं फलमिवानिलदोलितायाः ॥ २४ ॥

तत्याज काचिदशनं विषवद्विखिन्ना
　भिन्ना शरेण मदनस्य ततः प्रतीमः ।

उच्चाटको मनुरिव व्रजसुन्दरीषु
पीताम्बरेण मुरलीनिनदः प्रयुक्तः ॥ २५ ॥

कस्याश्चिदश्रुपरिपूरितलोचनाया
गात्रेषु तत्र पुलका वलयो विरेजुः ।
जानीमहे कुसुममार्गणमग्नबाण
श्रेणीसमुल्लसितपक्षशिखा स्फुरन्ति ॥ २६ ॥

कंसद्विषा भगवता रचिता तदानी-
माभीरवारिरुहसुन्दरलोचनानाम् ।
चेतांसि चारुमुरलीध्वनिधोरणी सा
लौहा निचुम्बकशिलेव समाचकर्ष ॥ २७ ॥

तं शृण्वतो मुरलिकानिनदं व्रजस्त्री-
वृन्दस्य बाष्पनिवहाः परितो निपेतुः ।
मन्ये तदीयहृदयैश्चपलैस्तदानीं
धैर्यापहं न सलिलाञ्जलयो वितीर्णाः ॥ २८ ॥

चन्द्रांशुभिर्धवलिते भुवने व्रजस्त्री
काचिन्मुरारिसविधं सहसा व्रजन्ती ।
रेजे गलद्वसनविस्फुटदेहकान्तिः
सौदामिनीव शरदम्बुधरस्य मध्ये ॥ २९ ॥

काश्चित्तदा यदुपतेः सविधं विमुक्त-
दोलायमानचिकुरप्रकराव्रजन्त्यः ।
रेजुश्चलद्भ्रमरपङ्क्त्यनुगम्यमाना
वातोद्धता इव लता व्रजबन्धुराक्ष्यः ॥ ३० ॥

काचित्तदा प्रतिपदं पथिविस्त्व(भिश्च)लन्ती
गायन्त्यनुद्धतपदं स्वरभङ्गयुक्तम् ।
यान्ती सरोजनयनस्य समीपदेशं
मत्तेव सीधुभिरतीव रराज गोपी ॥ ३१ ॥

इत्थं हरेः सविधमेत्य मृगीदृशस्ता
आरेभिरे बहुविधाः किल कामचेष्टाः ।
वंशीधरोऽथ कुशलं व्रजवासिनां स
पप्रच्छ विच्छवियुता अभवन्न तस्याः ॥ ३२ ॥

उद्भाव्यते न कुलपांशुलतादिदोषा-
न्कंसद्विषा भगवता विनिषेव्यमानम् ।
नैव न्यवर्तत ततो व्रजवारिजाक्षी
वृन्दं विमुक्त इव शाश्वतविष्णुलोकात् ॥ ३३ ॥

तासामवेत्य हृदयेषु विनिश्चयं तं
कृष्णः सदा शरणवर्तिजने दयालुः ।
मन्दानिले रविसुतापुलिने तदानीं
चिक्रीड ताभिरभितो व्रजसुन्दरीभिः ॥ ३४ ॥

अथ प्रार्थितं वेणुमादातुकामं करं केशवः पङ्कजाताभिरामम् ।
स कस्याश्चिदाकृष्य गोपाङ्गनायाश्चुचुम्बाननं चारुचन्द्राननायाः ॥ ३५ ॥

नभस्वत्समुद्वेल्लिताम्भोजसृष्टा निरीक्ष्यान्यतो गोपिका कापि दृष्टा ।
कृते पुष्पजातैर्निशानाथकल्पे हरिं प्रेरयामास संकेततल्पे ॥ ३६ ॥

कयाचित्समं वीक्ष्य कृष्णं वदन्तं कयाचिच्च साकं सलासं हसन्तम् ।
समुद्भाव्य कोपं व्रजन्त्याः सहर्षः स पाणिं परस्याः प्रियायाश्चकर्ष ॥ ३७ ॥

मुरारिः कयाचित्समालिङ्ग्यमानः स्फुरद्रोमहर्षेण विभ्राजमानः ।
यथा वीरुदालिङ्गितः स्वच्छशाखी लसत्कोरको दीव्यति साभिलाषी ॥३८॥

मुखं वीक्ष्य कस्याश्चिदिन्दुप्रकाशं व्रजन्तं हरिं गोपिकायाः सकाशम् ।
अथान्वग्ययुर्गोपवध्वः समस्ताः करिण्यो यथा नागमुत्तालहस्ताः ॥ ३९ ॥

लपन्ती मृदुस्मेरवक्त्राभिरामा क्षिपन्ती दृशौ दिक्षु लोले सकामा ।
व्रजन्ती समीपं हरिं गोपकन्या पुरस्तात्समुल्लासयामास धन्या ॥ ४० ॥

सुगानं तदा तन्वती किं च काचिन्नटन्ती च काचिद्धसन्ती च काचित् ।
उपेत्याच्युतस्यान्तिकं लोलदृष्टिर्मनो मोहयामास संजातदृष्टिः ॥ ४१ ॥

पिबन्ती मुरारेर्मुखं लोचनाभ्यां स्मितं कुर्वती स्मेरपद्मोपमाभ्याम् ।
निरीक्ष्यागतास्ता अभूत्कामजूर्तिर्हरेर्गोपिका संख्यका तत्र मूर्तिः ॥ ४२ ॥

शुभंयुस्वरं गीतमुच्चारयन्त्या कयाचित्समं स्मेरमास्यं वहन्त्या ।
ननर्ताच्युतश्चारुचाणूरजैत्रः समुत्फुल्लपाथोरुहद्रोहिनेत्रः ॥ ४३ ॥

सनालं कराभ्यां वितन्वन्नुदारं दृशालोकयन्सुस्तनीर्लोलतारम् ।
हरन्तीर्मनो नाट्यदोषैर्निरस्ता हरिर्नर्तयामास गोपीः समस्ताः ॥ ४४ ॥

स कस्याश्चिदास्यं समाघ्राय हृष्टः प्रयातः कयाचित्करेणातिकृष्टः ।
कयाचित्कटाक्षैः पुनर्वीक्ष्यमाणः शशाक प्रयातुं न पक्षीन्द्रयानः ॥ ४५ ॥

समुल्लास्य सर्वाः स्मितैर्गोपनारीर्दृशा लोलया कौतुकी वीक्ष्य ह्रीरीः ।
पुनर्वंशिकां वादयित्वा स कृष्णस्तिरोऽभूद्व्रजस्त्रीविवृद्धातितृष्णः ॥ ४६ ॥

अन्तर्हिते भगवति व्यथमानचित्ता
गोपाम्बुजातनयना गलदश्रुपूराः ।
मेघावलीभिरभितः पिहिते निशायां
चन्द्रे चकोरवनिता इव चुक्रुशुस्ताः ॥ ४७ ॥

काचित्तदीयचरणाङ्कपथे व्रजन्ती
निश्वासशुष्यदधरा करुणार्तनादा ।
तद्यापनं व्रजसरोरुहसुन्दराक्षी
तत्र स्वकान्तमिव रात्रिषु चक्रवाकी ॥ ४८ ॥

भो वृक्षराज वद कुत्र तवास्ति मित्रं
यः कृष्ण इत्यभिहितस्तव कान्तियोगात् ।
इत्यूचिरे व्रजसरोजदृशस्तमाल-
भूमीरुहं कृतकराञ्जलयः प्रणम्य ॥ ४९ ॥

हे मल्लिके कथय नीरधराभिरामो
दृष्टस्त्वयेह विचरन्नरविन्दनेत्रः ।
नालोकितः स च मयेति समीरयोग-
संचाल्यमानविटपच्छलतो ब्रवीषि ॥ ५० ॥

कङ्केलिपादप हरेः कथय प्रवृत्तिं
मन्येऽथवा स भवता विचरन्न दृष्टः ।
पश्येर्यदा भगवतः करकान्तिमुच्चै-
र्व्यक्तीकरिष्यसि तदा किमु पल्लवानि ॥ ५१ ॥
भ्रातर्द्विरेफ पदवीं वद पार्थबन्धो-
र्नूनं न वा तव दृशोः स च गोचरोऽभूत् ।
आलोकयेर्यदि हरेर्वदनारविन्दं
किं ते तदा विपिनपुष्पचये रतिः स्यात् ॥ ५२ ॥
इत्थं प्रलप्य बहुशो व्रजसुन्दरीणां
वृन्दानि लोचनगलत्सलिलोच्चयानि ।
चन्द्रांशुभिर्धवलिते गगने तदानी-
मारेभिरे भगवतोऽनुकृतं मुरारेः ॥ ५३ ॥ (कुलकम्
काचित्करेण मुरलीं दधती वहन्ती
मस्ते शिखण्डमरविन्ददृगायमाना ।
आरादचारयदरण्यधरासु शष्प-
युक्तासु काश्चिदथ धेनुकुलायमानाः ॥ ५४ ॥
कृष्णायमानतनुरम्बुविगाहिनीनां
कन्यायमानवपुषां व्रजसुन्दरीणाम् ।
कासांचिदम्बरचयानपहृत्य कूला-
त्काचित्कदम्बशिखराणि समारुरोह ॥ ५५ ॥
याशोदरूपमनुकृत्य कयापि दाम्ना
बद्धोदरे तमनुहृत्य शिशुं चलन्ती ।
तालद्वयानुकरणं सुदृशौ दधत्यौ
केचित्तदा झटिति पातयति स्म काचित् ॥ ५६ ॥
काचित्त्रिभङ्गिवलितं विरचय्य देहं
कण्ठे निधाय ललितां वनमालिकां च ।

कृष्णाकृतिं विदधती व्रजवारिजाक्षी
　　धारस्वरेण बत वादयति स्म वंशीम् ॥ ५७ ॥
इत्थं व्रजाम्बुजदृशामतिभक्तिभाजां
　　विज्ञाय भावमखिलं करुणार्द्रचेताः ।
तासां पुरः कनककुण्डलशोभिगण्डो
　　मन्दस्मितो विधिरिवाविरभून्मुकुन्दः ॥ ५८ ॥
नीलोत्पलद्युति मनोहरमग्रतस्तं
　　संवीक्ष्य पीतवसनं स शिखण्डमुच्चैः ।
सेन्द्रायुधं सतडितं व्रजयोषितस्ता
　　मेघं मयूरवनिता इव मोदमापुः ॥ ५९ ॥
संपश्य तत्कमलसोदरलोचनानि
　　तासां मुखानि शरदिन्दुसमप्रभाणि ।
यावत्य एणनयना हरिणा तदानीं
　　तावत्य एव रचिताः किल मूर्तयस्ताः ॥ ६० ॥
एकां तदा रसमये स तदेकमूर्ति-
　　रन्यां सरोजनयनां च तदन्यमूर्तिः ।
इत्थं विलासमवलोक्य मुरारिगोप्यो-
　　र्देवासुरा नभसि विस्मयमापुरन्तः ॥ ६१ ॥
मामेव केवलमयं भजते विलासी
　　नान्यासु गच्छति मनागपि मां विहाय ।
इत्यात्मनः कलयति स्म कृतार्थतां सा
　　क्रीडां यया सह चकार सरोजनेत्रः ॥ ६२ ॥
कृष्णः कयापि सह संविलसन्निकामं
　　तन्मानकालमवगम्य तिरोबभूव ।
मत्वाथ तां स गलदश्रुविनिश्वसन्ती-
　　माविर्भवत्पुरत एत पुनश्चुचुम्ब ॥ ६३ ॥

कृष्णः स्पृशन्करतलेन कठोरमुच्चैः
कस्याश्चिदुन्नतपयोधरमण्डलं सः ।
सस्मार पाणिकमले बत वर्गमानं
गोवर्धनक्षितिधरं पृथु बाहुवीर्यः ॥ ६४ ॥

संजातमाननमितानननमुद्वहन्त्याः
कस्याश्चिदम्बुरुहसुन्दरलोचनायाः ।
वंशीधरो मृदुकथाकथनच्छलेन
गत्वा श्रवः परिसरं वदनं चुचुम्ब ॥ ६५ ॥

इत्याद्यालम्बनम् ॥

यद्यप्येतत्संभोगविप्रलम्भयोरुदाहरणमुचितम्, तथापि आलम्बनं विना तयोरुदाहरणं दातुमशक्यत्वादिति ॥

अथ हास्यादीनां विभावानाह—

**विकृताकृतिवचोवेषं विपरीतविभूषणम् ।**
**हास्यस्यालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ॥ ६ ॥**

विकृताभिधानादय ऊह्याः । यथा—

चन्द्रे दृष्ट्वा नृत्यन्मायाशिशुरुत्क्षिपन्बाहुम् ।
नय मम हस्ते विधुमिति रुदन्यशोदापदे पतति ॥ ६६ ॥

अत्र चन्द्रदर्शनेन नर्तनशाली मायाशिशुरालम्बनम्, बाहूत्क्षेपरोदनाद्युद्दीपनम् ॥

**करुणालम्बनं प्राहुर्विनष्टसुहृदादयः ।**
**उद्दीपनं पुनस्तस्य दाहादि विनिगद्यते ॥ ७ ॥**

अत्र प्रथमादिशब्दात् बन्धुदारिद्र्यतद्बन्धनादयः, द्वितीयादिशब्दात्तु तन्नयनमुद्रणाद्यवस्था गृह्यन्ते । यथा—

तात त्वयीदृशदशे सति यद्भवामि
नाहं पुनर्भवदवस्थ इतः प्रतीमः ।
आत्मैव पुत्र इति यन्निगदन्ति वेदाः
प्रामाणिकाः सकलमेव तदप्रमाणम् ॥ ६७ ॥

अत्र गतासुः पिता आलम्बनम्, तन्नयननिमीलनादिदशाविशेष उद्दीपनम् ॥

**रौद्रस्यालम्बनं शत्रुमाहुस्तस्य क्रियाः पुनः।**
**रूक्षोक्तिमुष्टिपाताद्या उद्दीपनमुदाहृतम् ॥ ८ ॥**

आदिशब्देन पौरुषप्रकाशादयः कथ्यन्ते। यथा—

उद्दामद्युतिदुर्दिनीकृतसमिद्युद्धावरुद्धद्विष-
त्संदत्तद्रुतचित्तसाध्वसरसा सेयं गदा निर्दया।
वस्त्रं कृष्टवतः पतत्वधिशिरो दुःशासनस्याद्य त-
त्पाञ्चाली चिकुरं चिराय विततं बध्नातु निर्बन्धनः ॥ ६८ ॥

अत्र दुःशासन आलम्बनम्, द्रौपदीवस्त्राकर्षणमुद्दीपनम् ॥

**विजेतव्यादयो वीररसस्यालम्बनं मतम्।**
**विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनतां गताः ॥ ९ ॥**

विजेतव्यः प्रतिपक्षः। आदिशब्दात्संप्रदानीभूतो द्विजादिः, दुर्गतश्च गृह्यते। तेन युद्धवीरस्यालम्बनं विपक्षः। दानवीरस्यालम्बनं द्विजादिः। दयावीरस्यालम्बनं दुर्गतभक्त्यादयः। वीरस्यैषां चेष्टादारिद्र्याद्युद्दीपनम् ॥

युद्धवीरस्य विभावो यथा—

अयं त्रिलोकीजयदीर्घदर्पो दशाननोऽभ्येति कृतान्तकल्पः।
इतीरितं वालिसुतेन रामो निशम्य तत्राश्रुतवच्चकार ॥ ६९ ॥

अत्रालम्बनं दशाननः, त्रिलोकीजयाद्युद्दीपनम् ॥

दानवीरस्य विभावो यथा—

पायाद्वो भृगुनन्दनः स भगवान्संप्रान्तरीयान्वितं
विप्रो याति विपश्चितो वितरतः सर्वंसहो मण्डलम्।
क स्थातासि कुतश्चरिष्यसि धरां दत्त्वेति बन्धूक्तयः
प्रापुः पूर्णतरप्रमोदपिहिते चित्ते न यस्य स्थितिः ॥ ७० ॥

अत्रालम्बनं विप्रः, तस्य पाण्डित्याद्युद्दीपनम् ॥

दयावीरविभावो यथा—

कपालुता यस्य निकामदीनसुदामसौधावलिकैतवेन ।
सुपुष्पिता सर्वजनैर्व्यलोकि नमोऽस्तु तस्मै गरुडध्वजाय ॥ ७१ ॥

अत्रालम्बनं सुदामा, तस्य दैन्यमुद्दीपनम् ॥

केचित्तु—

'राज्यं च वसु देहश्च भार्याभ्रातृसुताश्च ये ।
यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम् ॥'

इति युधिष्ठिरवाक्ये वीररसचतुर्थं भेदं धर्मवीररूपमुदाहरन्ति, तच्चिन्त्यम् । धर्मवीरस्य देवादिविषय रतावन्तर्भावादन्यथा भक्त्यादीनां सर्वेषां भावानामतिरिक्तरसत्वापत्तेः । किं च निरहंकारदशायां धर्मवीरस्य शान्तरसेऽन्तर्भावात् ।

न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदीहा ।
रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमः प्रधानः ॥ ७२ ॥

इत्येवंरूपः शान्तरसः सुखाभावोऽत्र वैशेषिकसुखाभावः, न तु तृष्णाक्षयसुखाभावः उक्तं हि—

'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥' इति ॥

**यतः पदार्थाद्भयमाविरस्ति भयानकालम्बनमूचिरे तम् ।**
**उद्दीपनं तस्य पुनर्वदन्ति चेष्टां महाघोरतरां सुधीराः ॥ १० ॥**

यथा—

दैत्यद्रोहप्रयुक्तप्रलयघनघटाघोरनिर्घोषरोष-
व्यक्तव्यात्ताननान्तप्रचलहुतवहज्वालजालाभजिह्वा ।
वेगावेशोत्थवातोद्धतधरणिधरालोकनोत्कम्पितान्तः
सिद्धश्रेणीकृतातिस्तुतिनतिरवताद्भद्रदा भद्रकाली ॥ ७३ ॥

अत्रालम्बनं भद्रकाली, मुखव्यादानाद्युद्दीपनम् ॥

**दुर्गन्धिक्रव्यमेदांसि बीभत्सालम्बनं मतम् ।**
**उद्दीपनं पुनस्तस्य कृमिपातादि कथ्यते ॥ ११ ॥**

यथा—

दन्ताकृष्टविदष्टसास्थिपललव्राताति निर्यन्त्रण-
क्रूराक्रान्तिसमुद्भवत्कटकटत्कारक्रियाभैरवः ।
हस्तव्यस्तशवालिमस्तकसरन्मज्जाम्बुनिर्वापित-
प्रौढिप्राप्तचिताग्निरुद्भटतमः प्रेतोऽयमुज्जृम्भते ॥ ७४ ॥

अत्र पललमालम्बनम् । दन्ताकृष्ट्याद्युद्दीपनम् ॥

**लोकातिगः पदार्थः स्यादद्भुतस्यावलम्बनम् ।**
**उद्दीपनं भवेदस्य तद्गुणातिशयः पुनः ॥ १२ ॥**

मायेन्द्रजालादय ऊहनीयाः । यथा—

दंष्ट्राकोटिप्रविष्टक्षितिधरणिधरव्यूहनिष्पातलोक-
व्यक्तव्यालोपशङ्कानिभृततरपरित्यक्तनिश्वासवातः ।
बालाग्राविद्धतारागणजनितलसन्मौक्तिकश्रेणिबुद्धि-
र्दुष्टद्रोहव्रती वः कलयतु कुशलं कोऽपि कोलावतारः ॥७५ ॥

अत्र कोलावतार आलम्बनम्, तस्य दंष्ट्रामहत्त्वाद्यतिशय उद्दीपनम् ॥

इन्द्रजालं यथा—

शरदिन्द्रजालिवेषा प्रतिनिशमेषा वियद्वलयम् ।
फलयति हिमकरकपटात्ताराव्याजेन पुष्पयति ॥ ७६ ॥

**अनित्यत्वेन निःसारं शान्तस्यालम्बनं जगत् ।**
**उद्दीपनं पुनस्तीर्थपुण्यारण्यनगादयः ॥ १३ ॥**

आदिपदान्महापुरुषोपदेशादयः । यथा—

संसारे सकले विनाशिविषयाधारे परिभ्राम्यता
हा धिक्कष्टमनिष्टलब्धिविषयः कालो मया यापितः ।
नो जाने परिहृत्य सङ्गमखिलं चित्ते परं ध्यायतः
पुण्यारण्यनिकेतने वद कदा यास्यन्ति मे वासराः ॥ ७७ ॥

अत्रानित्यविषयाधारत्वेनासारं जगदालम्बनम्, पुण्यारण्याद्युद्दीपनम् ॥

केचित्तु—

'यदाह धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥'

इत्यत्र दशमं वत्सलाख्यं रसमुदाहरन्ति, तच्चिन्त्यम् । पुत्रादिविषयरतिभावे तस्यान्तर्भावात् । न च स्थायिभावभेदेन रसो भिद्यते । तस्मादस्य स्थायीभावः स्नेहस्तद्भेदाद्भेदोऽस्येति वाच्यम् । स्नेहस्यापि रत्यात्मकत्वादिति दिक् ॥

इति श्रीमहाराजाधिराजश्रीकर्णसिंहकारिते मैथिलश्रीगङ्गानन्दविरचिते कर्णभूषणे विभावनिरूपणो नाम प्रथमः परिच्छेदः ।

---

## द्वितीयः परिच्छेदः ।

अथानुभावा निरूप्यन्ते—

**बहिः प्रकाशयन्भावमुद्बुद्धं स्वस्वकारणैः ।**
**लोके कार्याभिधो यः सोऽनुभावः काव्यनाट्ययोः ॥ १ ॥**

स्वैः स्वैः कारणैरालम्बनोद्दीपनरूपैरुद्बुद्धं रत्यादिकं भावं बहिः प्रकाशयन् लोके यः कार्यमित्यभिधीयते स पुनरनुभावरूपव्यापारवत्त्वात्काव्ये नाट्ये चानुभावः कथ्यते ॥

**धरणीधामसंयोगादक्षुण्णां कुरु काण्डवत् ।**
**विषयीकरणां व्यक्तेरनुभावनमुच्यते ॥ २ ॥**
**स चानुभावो धीरेण चतुर्भेदो निगद्यते ।**
**कायिको मानसश्च स्यादाहार्यः सात्त्विकोऽपरः ॥ ३ ॥**
**कायिकश्च कटाक्षादिः प्रमोदादिश्च मानसः ।**
**नाट्ये चतुर्भुजत्वादि ज्ञानमाहार्य उच्यते ॥ ४ ॥**
**सात्त्विकः स्वेदरोमाञ्चस्तम्भादिः कथ्यते बुधैः ।**
**अथानुभावाः कथ्यन्ते शृङ्गारस्य स्मितादयः ॥ ५ ॥**

आदिशब्दात्कटाक्षभ्रूविक्षेपादयः । यथा—

किंचित्किंचिदुदञ्चितस्मितसुधाधौताधरोपान्तया
　　तिर्यक्पर्यवचालिताञ्चलपटी सुव्यक्तवक्षस्त्विषा ।

मुक्तास्तत्र तया कलिन्दतनयाकल्लोलहिन्दोलन-

क्षुब्धक्षीरसमुद्रलोललहरीस्पर्धा समृद्धा दृशः ॥ १ ॥

अत्र स्मितादयः।

ननु वीक्षितेषु कटाक्षादिषु कामिनो रसोत्पत्तिर्भवतीत्यनुभवसिद्धमेतत्। अतस्तेऽप्युद्दीपनविभावा भवितुमर्हन्तीति चेत्, सत्यम्। नायिकायाः स्वात्मनि रसानुभवकरणत्वेन कटाक्षादयोऽनुभावा नायकस्य पुनर्दृष्टिपथगता मनो विकारयन्ति, अतस्तं प्रति ते च विषयत्वेनोद्दीपनविभावाः। तथाच कटाक्षादीनां करणत्वेनानुभावकता विषयत्वेनोद्दीपकता चेति ध्येयम्॥

अथाष्टाविंशतिसंख्याकान्भावादीननुभावलक्षणयोगादनुभावानाह—

हावभावौ तथा हेला त्रयस्तेऽङ्गसमुद्भवाः।

शोभा कान्तिश्च दीप्तिश्च प्रगल्भत्वमुदारताः॥ ६॥

माधुर्यं धैर्यमित्येतान्सप्त प्राहुरयत्नजान्।

तथा लीलाविलासश्च बिम्बोकः किलकिञ्चितम्॥ ७॥

विच्छित्तिर्विभ्रमो मौग्ध्यं विकृतं तपनं मदः।

मोट्टायितं कुट्टमितं ललितं च कुतूहलम्॥ ८॥

विक्षेपो हसितं केलिस्तथा चकितमित्यपि।

भावादयोऽत्र धैर्यान्ता नायकेष्वपि ते दश॥ ९॥

एषां क्रमेण लक्षणमाह—

जन्मतः प्रभृति स्वान्ते विकारपरिवर्जिते।

उद्भद्भमात्रः प्रथमं विकारो भाव उच्यते॥ १० ॥

यथा—

स एव यमुनातीरसङ्गीसखि समीरणः।

तदेवोपवनं चित्तमन्यादृशमिदं कुतः॥ २॥

विकारैर्लोचनादीनां संभोगेच्छाप्रकाशकः।

अल्पसंलक्ष्यवैकृत्यो भावो हावः प्रकीर्तितः॥ ११॥

यथा—

अनिमिषदृशा सरस्यां पश्यन्ती चक्रवाकमिथुनानि।

किंचिदुदञ्चितपुलकैर्मुग्धवधूर्भावमाख्याति॥ ३॥

**हेलात्यर्थसमालक्ष्यविकारो भाव एव च ।**

यथा—

रेखाञ्जनस्य सरलापि कृतातियत्ना-
त्कौटिल्यमेव भजते नयने यदस्याः ।
वाच्येषु यद्भणितयः सकलेषु वक्रा
जानीमहे मदनजीवनमम्बुजाक्षी ॥ ४ ॥

ननु भावादयस्त्रय आन्तरा धर्माः कथमतीन्द्रियस्य रसस्यानुभावत्वेन ज्ञापका भविष्यन्ति, शारीरा धर्माः कटाक्षादयस्तस्यानुभावकत्वेनोक्ता इति चेन्न । (१)........................................................................

आन्तरोऽप्यनुभावः कथितोऽस्ति । प्रमोदादिस्तस्य ज्ञानमेवानुभावकम् । तच्चैन्द्रियकं मानसं वेति न कश्चिद्विशेषः ।

उक्तं हि भरतेन—

'नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च ।
विविधैरङ्गविकारैस्तस्याभिनयः प्रयोक्तव्यः ॥' इति ॥

**रूपलालित्यतारुण्यभोगैः शोभाङ्गभूषणम् ॥ १२ ॥**

यथा—

पाणिः प्रवालसुभगस्तव कुन्दवृन्द-
निन्दाकरी जयति सुन्दरि दन्तपङ्क्तिः ।
चक्षुः सरोजसुषमं मुखमिन्दुबन्धु-
र्जीवी जनो भवति कस्तव नैव वश्यः ॥ ५ ॥

**कामोन्मेषातिविस्तीर्णा शोभा कान्तिर्निगद्यते ।**

यथा—

हरसि कुचयोः कान्त्या हेमाचलश्रियमुन्नतां
सुमुखि वदनं लक्ष्मीमिन्दोर्बलादिह कर्षति ।
नयनयुगलं गृह्णात्यम्भोरुहद्युतिसंपदं
भुवनविजये कामः कोषं किमालि समीहते ॥ ६ ॥

---

१. अत्र कियान्पाठस्त्रुटित इति न ज्ञायते.

अत्यन्तविस्तृता कान्तिः सैव दीप्तिरुदीरिता ॥ १३ ॥

यथा—

एतस्याः करपल्लव····मिथुनं संध्या धिया सीदति
किं च प्राञ्चति यत्र यत्र सुमुखी तत्राङ्गदीप्त्या पुनः ।
·············································
············································· ॥ ७ ॥

सर्ववस्तुषु रसोद्दीप्तिर्भवति । अत उद्दीपनविभावत्वमासां युक्तम्, न पुनरनुभावत्वमिति चेत्, सत्यम् ।

दृष्टे हि शोभादौ कामिनां रसोद्दीपकत्वान्न उद्दीपनविभावा भवन्ति । ना[2]·············································
·············································
·············································
·············································
·············································
·············································
·············································
·············································
·············································
·············································णादयः ।

यथा—

गोप्योऽपि तं मधुरवेणुनिनादमुच्चैः
श्रुत्वा तदा मनसि विस्मृतसंभ्रकृत्याः ।
स्विद्यद्वपुः प्रलकपालिपरीतगात्राः
कृष्णस्य चारु चरितं ललितं जगुस्ताः ॥ ८ ॥

यथा वा—

वंशीरवश्रवणकम्पितदेहयष्टेः
कस्याश्चिदम्बुरुहसुन्दरलोचनायाः ।

१.-२. अत्र कियान्पाठस्त्रुटित इति न ज्ञायते.

अङ्कात्पपात तनयोऽल्पतनुर्लतायाः
वृन्तान्नवं फलमिवानिलदोलितायाः ॥ ९ ॥

यथा वा—

काश्चित्तदा यदुपतेः स........विमुक्त-
व्यालोलचारुचिकुरप्रकरा व्रजन्त्यः ।
रेजुश्चलद्भ्रमरपङ्क्त्यनुगम्यमाना
वातोद्धता इव लता व्रजबन्धुराक्ष्यः ॥ १० ॥

**सविधो कोऽतिगर्वेण पापीष्टेऽर्थे तिरस्कृतिः ।**

यथा—

मानापनोदनकृते किल दीयमानं
कृष्णेन कौस्तुभमणिं तमनर्घ्यमूल्यम् ।
ईषद्विलोक्य नयनाम्बुरुहेण गोपी
काचित्पुरोगतमवीक्षितवच्चकार ॥ ११ ॥

**स्मितक्रोधश्रमत्रासशुष्करोदनकर्मणाम् ॥ १४ ॥**
**प्रियसंगमजाद्धर्षात्सांकर्यं किलकिञ्चितम् ।**

यथा—

त्रसन्ती हसन्ती वृथा संरुदन्ती स्मितं कुर्वती कोपमुद्भावयन्ती ।
परीरम्भणायाथ शौरेस्तदानीं मनो मोहयामास काचित्सुवाणी ॥ १२ ॥

**नेपथ्यरचनाल्पापि विच्छित्तिः कान्तिपोषिका ॥ १५ ॥**

यथा—

हारो नोरसि नाञ्जनं नयनयोः कर्णे न वा कुण्डलं
शोभाधिक्यमियं तथापि स परीधत्ते कपोले तव ।
जानीमः कुसुमायुधस्य नृपतेस्त्वं केतुयष्टिस्ततः
केतुस्ते न सुलोचने त्वदुपरि स्वीयः समारोपितः ॥ १३ ॥

**प्रियागमनकर्मादौ त्वरा हर्षादिसंभवः ।**
**अलंकारादिविन्यासः प्रस्थाने विभ्रमः स्मृतः ॥ १६ ॥**

विपर्यस्तो न्यासो विन्यासः । यथा—

आयाति प्रणयी तवेति वचनं श्रुत्वा सखीभाषितं
भूषान्यासविधिं तनौ मृगदृशा संपादयन्त्या तया ।
केयूरं पदपङ्कजे परिहितं बाहौ धृतं नूपुरं
काञ्ची कण्ठतटे न्यधायि जघने न्यस्ताश्च पुष्पस्रजः ॥ १४ ॥

**अज्ञानादिव कामिन्या ज्ञातस्यापि हि वस्तुनः ।**
**यः प्रश्नः क्रियते पत्युः पुरस्तन्मौग्ध्यमुच्यते ॥ १७ ॥**

यथा—

किं सरस्तत्क्व वा भूमौ कृष्ण केन विनिर्जितम् ।
यत्पद्ममेतदत्रास्ति पञ्चशाखे पदे तव ॥ १५ ॥

**वक्तव्यसमयेऽपि स्यादवचो विकृतं ह्रिया ।**

यथा—

कान्ते तं तं कथय यमुनातीरवानीरकुञ्जे
वृत्तान्तं मे त्वमिति कुतुकात्पृच्छ्यमाना मया सा ।
न ब्रूते स्म स्वयमवनता किं तु सर्वं तदानीं
गात्रप्रोद्यत्पुलकपटली पङ्कजाक्षी जगाद ॥ १६ ॥

**तपनं प्रियविश्लेषे कामवेगोत्थिता क्रिया ॥ १८ ॥**

यथा—

विलुठति बहुशः क्षितौ निकामं क्षिपति यतस्तत एव बाहुवल्लीम् ।
श्वसिति समधिकं सरोरुहाक्षी बत करुणाविमुखो विधेर्विलासः ॥१७॥

**मदो विकारः सौभाग्यतारुण्याव्य(द्य)वलेपजः ।**

यथा—

घनमलयजपङ्कलेपमङ्गे विरचय मा मम केलिकारणेन ।
सुमुखि यमुपगूहनान्तरायं पतिरवगम्य वियोगिवद्बिभेति ॥ १८ ॥

यथा वा—

उपवनकुसुमावलोकनेषु प्रियसखि नैव समुत्सुकाहमस्मि ।
युगपदभिमुखं निपत्य तस्मिन्विदधति वीक्षणवारणानि भृङ्गाः ॥ १९ ॥

यथा वा—

मामेव केवलमयं भजते विलासी
नान्यासु गच्छति मनागपि मां विहाय ।
इत्यात्मनः कलयति स्म कृतार्थतां सा
क्रीडां यया सह चकार सरोजनेत्रः ॥ २० ॥

**दयितस्य कथारम्भे चित्ते तद्भावभाविते ॥ १९ ॥**
**तन्मोट्टायितमाचख्युः कर्णकण्डूयनादि यत् ।**

यथा—

आलीजनेन दयितस्य कथासु तासु
संचारितासु सुदृशः करपद्ममस्याः ।
आरोपितुं प्रियकथामिव कर्णसीम्नि
कण्डूयनस्य कपटेन करोति खातम् ॥ २१ ॥

**ग्रहे[1] कचस्तनादीनां हर्षे सत्यपि संभ्रमात् ॥ २० ॥**
**ऊचुः कुट्टमितं नेति मस्तकम्पनधूननम् ।**

यथा—

अधरमधुरसे निपीयमाने सति हरिणा व्रजबल्लवाङ्गनायाः ।
चिकुरमधुकरालिरीर्ष्ययेव क्षणधुतमस्तकवोधिता चचाल ॥ २२ ॥

**अङ्गानां सौकुमार्येण विन्यासो ललितं भवेत् ॥ २१ ॥**

यथा—

हरन्त्यो मत्तकुम्भीन्द्रदर्पं हंसोपहासिकाः ।
राधिकागतयोऽत्यर्थं रेजुर्मन्मथमन्थराः ॥ २३ ॥

**रम्यार्थस्यावलोकेन चाञ्चल्यं स्यात्कुतूहलम् ।**

यथा—

अजानन्ती कचात्पुष्पं पतत्पादाच्च नूपुरम् ।
गोवर्धनं दधानं तं द्रष्टुं काचिद्ययौ द्रुतम् ॥ २४ ॥

**भूषणस्यार्धनिर्माणं वृथा विष्वग्निरीक्षणम् ॥ २२ ॥**
**ईषद्वचो रहस्यस्य विक्षेपो दयितान्तिके ।**

---

१. ग्रहणे इत्यर्थः.

यथा—

वदति रहस्यं किंचिच्चकितां सर्वत्र दृष्टिमाधत्ते ।
अर्धविनिर्मितमक्ष्णोः कज्जलमेषा करोति तन्वङ्गी ॥ २५ ॥

**हसितं तु वृथाहासो यौवनोद्भेदसंभवः ॥ २३ ॥**

यथा—

अकस्मादेव हासोऽस्या यन्मुखादेव निर्ययौ ।
तन्मन्ये तूर्णतः पुष्पबाणः कामेन दर्शितः ॥ २६ ॥

**क्रीडितं सह कान्तेन विहारे केलिरुच्यते ।**

यथा—

कृष्णः कयापि सह संविलसन्निकामं
तन्मानकालमवगम्य तिरोबभूव ।
मत्वाथ तां स गलदश्रु विनिश्वसन्ती-
माविर्भवन्पुरत एव पुनश्चुचुम्ब ॥ २७ ॥

**चकितं भयसंभ्रान्तिः कुतोऽपि दयिताग्रतः ॥ २४ ॥**

यथा—

वासापुष्पं[1] वने वीक्ष्य व्यात्तसर्पाननभ्रमात् ।
बिभ्यती चकितं गाढमालिलिङ्गाङ्गना प्रियम् ॥ २८ ॥

एतेषामनुभावानां मध्ये दश भावादयः पुंसामपि भवन्ति, नायिकानां तु सर्वे ।

ननु भावादयः सर्वे नायिकानामलंकारत्वेन गणितास्तत्कथमनुभावा भवन्ति, इति चेत् सत्यम् । अलंक्रियतेऽनेनेत्यलंकारो रसानुभवगोचरतां नयतीत्यनुभावश्चेत्युभयलक्षणयोगादेतेषां भावादीनामुभयात्मकत्वमविरुद्धम् । उक्तं हि—

'उक्ताः स्त्रीणामलंकारा अङ्गजाश्च स्वभावजाः ।
तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि ॥' इति ।

तद्रूपा अनुभावरूपाः ।

केचित्तु नायिकानां शृङ्गारचेष्टा हावः । स च स्वभावजः । तासां कः पुनरसावित्याह भरतः—

---

१. अटरूषपुष्पम्.

'लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ।
विकृतं च—' इति ।

विभ्रमाः पुंसामपि सोपाधिका भवन्ति, स्त्रीणां पुनः स्वभावजा एव । इयान्विशेषः । उद्दीपने सति स्त्रीणां तेषामाविर्भाव उद्दीपनाभावे तिरोभाव इति वदन्ति । उदाहरणं तु पूर्वोक्तमेव । हावत्वमनुभावत्वमविरुद्धम्, अनुभावत्वस्य व्यापकधर्मत्वात् अलंकारत्वस्य च व्याप्यधर्मत्वादिति संक्षेपः—

अथ सात्त्विकभावा निरूप्यन्ते—

**स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।**
**वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः ॥ २५ ॥**

सत्त्वं नामात्मविश्रामप्रकाशकारी आन्तरः कश्चन धर्मविशेषः । तत्संभूताः सात्त्विकाः । केचित्तु 'सत्त्वं जीवच्छरीरं तस्य धर्माः सात्त्विका भावाः' इति वदन्ति । व्यभिचारिणः स्थायिनश्चान्तरा धर्मा न तु शारीराः ।

क्रमेण लक्षणम्—

**मनस्तापभयक्रोधहर्षलज्जाश्रमादिना ।**
**वपुर्जलोद्गमः स्वेदः सुधीभिः परिकीर्तितः ॥ २६ ॥**

यथा—

एतद्भूषणकौशलं तव तनौ पश्येत्तदा माधवो
राधे तत्सविधे तु चेतसि चले चेद्धैर्यमाधास्यति ।
इत्थं जल्पति शिल्पकारिणि जने तस्याः स्मरन्त्या हरिं
सद्यः स्वेदसरिद्बलुम्पदमलं पत्रावलीमण्डलम् ॥ २९ ॥

**विषादविस्मयक्रोधहर्षरागभयादिभिः ।**
**गतेर्निरोधः सत्यङ्गधर्मत्वे स्तम्भ उच्यते ॥ २७ ॥**

अङ्गधर्मत्वे सतीति विशेषणदानादपस्मारनिद्रादीनां व्यावर्तनम् । प्रलये तु चेष्टानिरोधो न तु गतिनिरोधः । यथा—

परस्परोदञ्चितरोमकण्टकैः परस्परं कीलितनेत्रपात्रयोः ।
परस्परस्तम्भनिबद्धदेहयोरभूत्प्रयासो विफलायितस्तयोः ॥ ३० ॥

**हर्षक्रोधभयाश्लेषतुहिनाद्भुतसंभवम्।**
**रोमोत्थानं तु रोमाञ्चः कथ्यते सर्वकोविदैः॥ २८॥**

यथा—

कस्याश्चिदश्रुपरिपूर्णविलोचनाया
गात्रेषु तत्र पुलकावलयो विरेजुः।
जानीमहे कुसुममार्गणमग्रबाण-
श्रेणीसमुल्लसितपक्षशिखाः स्फुरन्ति॥ ३१॥

**वैस्वर्यं स्वरभङ्गः स्यात्क्रोधहर्षमदादिभिः।**

यथा—

प्रच्छादयसि किं तन्वि पुलकं वसनाञ्चलैः।
कथयत्यखिलं भावं स्वरभङ्गो मनोगतम्॥ ३२॥

**भावत्वे सति हर्षादेः स्पन्दो देहस्य वेपथुः॥ २९॥**

भावत्वे सतीति विशेषणं सूचकस्पन्दव्यावर्तनाय। यथा—

आदायाश्रुजलं दृशाभिमिलितः पत्युः पुरो धावितं
दत्तं चारु तनोः स्तनेन विदलत्कुर्यात्सरूप्यासनम्।
चक्रेऽभ्यर्चनमङ्गकेन विलसद्रोमाञ्चदूर्वाङ्कुरैः
प्रापृच्छद्रसनारवेण कुशलं कम्पः कुरङ्गीदृशः॥ ३३॥

**मोहक्रोधमनस्तापभयश्रममदादिजः।**
**वर्णानामन्यथाभावो वैवर्ण्यं कथ्यते बुधैः॥ ३०॥**

यथा—

धारावलीमौक्तिकहारहीनस्त्यक्तस्तडित्कान्तिचयेन दीनः।
व्यधत्त देहे खलु पाण्डिमानं प्रावृड्वियोगव्यथयाम्बुवाहः॥ ३४॥

**दुःखक्रोधप्रहर्षादेरश्रु नेत्रोद्भवं पयः।**

यथा—

तं शृण्वतो मुरलिकानिनदं व्रजस्त्री-
वृन्दस्य बाष्पनिवहाः परितो निपेतुः।
मन्ये तदीयहृदयैश्चपलैस्तदानीं
धैर्याय हन्त सलिलाञ्जलयो वितीर्णाः॥ ३५॥

**प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः ॥ ३१ ॥**

यथा—

अन्योन्यनिबिडाश्लेषनिश्चेष्टसकलाङ्गयोः ।
यूनोर्जीवनमाख्याति वपुषः पुलकोद्गमः ॥ ३६ ॥

**जृम्भापि नवमो भावः प्रोक्तो भानुकवीश्वरैः ।**

भावः सात्त्विक इति शेषः । न चाङ्गाकृष्ट्यादेः सात्त्विकभावत्वापत्तिरिति वाच्यम् । तस्य भावलक्षणाभावात् । जृम्भा तु विकारजन्या । विकारनिवृत्तौ जृम्भानिवृत्तिः । अङ्गाकृष्टिनेत्रमर्दनादयो लोकैः स्वेच्छया क्रियन्ते । तेषां विकारजन्यत्वाभावात् ।

यथा—

मानावसानसमये वदने प्रियाया
जृम्भां विलोक्य कुसुमालिमिवाकिरन्तीम् ।
हस्ताङ्गुलीध्वनिमिषेण मृदङ्गशब्दं
प्राक्केलिताण्डवविधेरकरोन्मुरारिः ॥ ३७ ॥

**अथ हास्यानुभावाः स्युर्वदनस्मेरतादयः ॥ ३२ ॥**

आदिशब्दान्नासाकपोलस्पन्ददृष्टिकुञ्चनादयः ।

यथा—

स्त्रीवासः परिधाय लोचनयुगे न्यस्याञ्जनं कर्णयो-
स्ताटङ्के च निवेश्य बिल्वयुगलं वक्षःस्थले स्थापितम् ।
तत्पश्यन्नसकृत्पतन्मुहुरुरोदेशे तदा योजय-
न्नाकुञ्चन्नयनं जनेन हसता मायाशिशुर्वीक्षितः ॥ ३८ ॥

अत्राक्षिसंकोचः ॥

**करुणस्यानुभावाः स्युर्वैवर्ण्यं परिदेवनम् ।**
**भूमिपातो दैवनिन्दा निश्वासो मुखशोषणम् ॥ ३३ ॥**
**प्रलापः क्रन्दनं मोहागमोरस्ताडनादयः ।**

यथा—

शक्त्या विद्धं समिति पतितं लक्ष्मण त्वां विलोक्य
व्यातन्वानः स्तनितनिचयच्छद्मनाक्रन्दमुच्चैः ।

विद्युद्व्याजादयमपि घनः पश्य संतापवह्निं
बिभ्रद्बाष्पं सृजति नितरां वारिधाराच्छलेन ॥ ३९ ॥

अत्राक्रन्दनादयः ॥

**रौद्रेऽनुभावा भ्रूभङ्गो दन्तैरधरपीडनम् ॥ ३४ ॥**
**आत्मावदातकथनं शस्त्रक्षेपश्च तर्जनम् ।**
**बाहुस्फोटनवैवर्ण्य एवमाद्याः प्रकीर्तिताः ॥ ३५ ॥**

यथा—

भीमोऽहं राजपुत्रीचिकुरपरिकराकृष्टिदृष्टिप्रवृद्ध-
द्रोहो दुःशासनोरःस्थलरुधिरपयः पानबद्धप्रतिज्ञः ।
यद्दोर्दण्डप्रतापे प्रतपति परितः कौरवीनां चमूनां
गोपुर्दुर्योधनस्य व्रजति पृथुतरः शुष्कतां गर्वपङ्कः ॥ ४० ॥

अत्र प्रतिज्ञादयः ॥

**अथ वीरानुभावाः स्युः स्थैर्यधैर्यपराक्रमाः ।**

विनयदानप्रभावविक्षेपान्वेषणादय ऊहनीयाः ।

युद्धवीरानुभावो यथा—

आयात्येष कृतान्तभीषणतनुर्दिव्यास्त्रपारंगमो
दोर्दण्डेन वशीकृतत्रिभुवनः श्रीदीप्तदर्पोद्धुरः ।
इत्युक्त्वाङ्गुलिसंज्ञया परिजनैर्विज्ञापितं रावणं
वीक्ष्यावीक्षितवच्चकार निभृतं दृष्ट्या रघूणां पतिः ॥ ४१ ॥

अत्र स्थैर्यधैर्ये ॥

दानवीरानुभावो यथा—

पश्यन्वामनरूपिणं क्षितिसुरं वैरोचनिः कौतुक-
व्यग्रान्तःकरणो न तस्य सहसा सस्मार संभाषणम् ।
मह्यं देहि पदप्रमाणधरणीमित्युक्तिकर्त्रे पुन-
स्तस्मै लोचनयोः प्रमोदसलिलव्याजेन सोऽर्घं ददौ ॥ ४२ ॥

अत्राश्रु ॥

दयावीरानुभावो यथा—

कण्ठान्तिकं यावदुपैति कृष्णनामार्तिभाजः करटीश्वरस्य ।
तावन्महाकोमलमानसस्तं ग्राहाननान्मोचयति स कृष्णः ॥ ४३ ॥

अत्र प्रभावः ॥

**भयानकानुभावाः स्युर्गद्गदस्वरभाषणम् ॥ ३६ ॥**
**वैवर्ण्यपुलकाश्रूणि स्वेददिक्प्रेक्षणादयः ।**

यथा—

गीतं कुण्डलिकन्यया तव यशः श्रीकर्ण शेषान्तिके
संतोषेण विधूतमूर्धनि पुनस्तस्मिन्भवद्वैरिणः ।
त्वत्सेनागमनानमत्क्षितितलक्षोभाशया कुर्वते
गुप्ताः कुञ्जगृहोदरेष्वशरणं हाहारवगर्भा गिरः ॥ ४४ ॥

अत्र हाहाकारः ॥

**बीभत्सस्यानुभावाः स्युर्दृगा (?) स्याच्छादनायः ॥ ३७ ॥**

आदिपदात्सर्वाङ्गसंहारनिष्ठीवनादयः ।

यथा—

हन्त दुःशासनासृञ्जि पिबन्तं भीममाहवे ।
वीक्ष्य प्रच्छादयामासुः करैर्नेत्राणि सैनिकाः ॥ ४५ ॥

स्पष्टम् ॥

**स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गश्च संभ्रमः ।**
**विलोचनविकाराद्या अनुभावा रसेऽद्भुते ॥ ३८ ॥**

यथा—

पयोधावतलस्पर्शे सेतुं रामेण निर्मितम् ।
संवीक्ष्य राक्षसाः सर्वे तस्थुश्चित्रार्पिता इव ॥ ॥ ४६ ॥

अत्र स्तम्भः ॥

**अनुभावो रसे शान्ते सर्वत्र समदृष्टिता ।**

रोमाञ्चादय ऊहनीयाः ।

यथा—

मुरारे कंसारे भवजलधितारे हिततरे
हरे शौरे लक्ष्मीरमण रघुवीरेति जपतः ।

समीकृत्य प्रेक्षां जगति सकले संकलयतः
कदा गोदातीरे कथय मम यास्यन्ति दिवसाः ॥ ४७ ॥

अत्र समदृष्टित्वम् ॥

प्रसङ्गादाह—

द्रष्टा दर्शयति व्रीडां नैव संमुखमीक्षते ॥ ३९ ॥
अतिक्रान्तं भ्रमन्तं वा प्रच्छन्नं पश्यति प्रियम् ।
पृच्छ्यमानापि बहुशो मन्दं मन्दं नतानना ॥ ४० ॥
किंचित्सगद्गदं प्राणनाथं प्रायेण भाषते ।
अन्यैः प्रियकथां शश्वत्प्रारब्धामेकमानसा ॥ ४१ ॥
अन्यत्र न्यस्तनयना कर्णयन्त्यनुरागिणी ।
इत्यादीनि.....गीतानि कन्यकामुग्धयोः.....॥ ४२ ॥

शृङ्गारानुभावाः दिङ्मात्रमुदाह्रियन्ते ।

यथा—

मत्संमुखे मृगाक्षी तस्थौ वदनं परावर्त्य ।
अथ निर्याते मयि सा पथि मे निदधे दृशौ दीने ॥ ४८ ॥

अथ सकलकामिनामनुरागेङ्गितान्यनुभावाः कथ्यन्ते—

प्रियस्य निकटे वासं चिराय बहु मन्यते ।
प्रियस्याक्षिपथं याति न कदाप्यनलंकृता ॥ ४३ ॥
काचिदूर्ध्वस्थवस्तूनां ग्रहणव्यपदेशतः ।
बाहुमूलं कुचौ नाभीपङ्कजं परिदर्शयेत् ॥ ४४ ॥
आनन्दयति सूक्तेन प्रियस्य परिचारकम् ।
अस्य मित्रेषु विश्वासमादरं च करोति सा ॥ ४५ ॥
ब्रूते गुणान्सखीमध्ये ददाति स्वधनान्यपि ।
प्रिये सुप्ते स्वपित्यस्य दुःखे दुःखं दधाति च ॥ ४६ ॥
सुखेऽस्य सुखमाधत्ते म्लानेऽस्मिन्मलिना भवेत् ।
तिष्ठत्यक्षिपथे शश्वत्प्रिये पश्यति दूरतः ॥ ४७ ॥

आभाषते परिजनं प्रियस्याप्यनुरागिणी ।
यत्किंचिदपि संवीक्ष्य हसितं कुरुते मुधा ॥ ४८ ॥
कर्णकण्डूयनं बाला कुरुतेऽस्य कथासु च ।
संमार्ज्य चिकुरं गेहे बध्नात्यागच्छति प्रिये ॥ ४९ ॥
जृम्भते स्फोटयत्यङ्गं बालमाकृष्य चुम्बति ।
वयस्यायास्तथा भाले कुरुते तिलकक्रियाम् ॥ ५० ॥
निरीक्षते कटाक्षेण लिखत्यङ्गुष्ठकोटितः ।
स्वाधरं दशति ब्रूते प्राणनाथमधोमुखी ॥ ५१ ॥
विमुञ्चति न तं देशं दृश्यते यत्र नायकः ।
कार्यव्याजेन कान्तस्य गृहमागच्छति स्वयम् ॥ ५२ ॥
दत्तं च प्रेयसा वस्तु निधायोरसि वीक्षते ।
हृष्यति प्रेयसो योगे वियोगेऽतिकृशा भवेत् ॥ ५३ ॥
तच्छीलं साधु मनुते तत्प्रियं मन्यते प्रियम् ।
अल्पमूल्यानि वस्तूनि प्रार्थयत्यात्मनः प्रियम् ॥ ५४ ॥
विकारं सात्त्विकं तस्य संमुखी नाधिगच्छति ।
सूनृतं भाषते नित्यमनुरागयुता वधूः ॥ ५५ ॥
एतेषु च प्रगल्भाया हतलज्जं विचेष्टितम् ।
मध्यलज्जं तु मध्याया बहुलज्जं नवस्त्रियः ।
तथापि गतलज्जं तु वेश्यायाश्च परस्त्रियाः ॥ ५६ ॥

इत्यादीन्यनुरागेङ्गितानि सकलकामिनीनां शृङ्गारानुभावा दिङ्मात्रमुदाह्रियन्ते ।

यथा—

कर्षन्ती शिरसो वासः करेणाच्छादितुं मुखम् ।
व्रजन्ती पङ्कजाक्षी मां पथि दर्शयति स्तनौ ॥ ४९ ॥

इति श्रीमहाराजाधिराजश्रीकर्णसिंहकारिते कर्णभूषणे मैथिलश्रीगङ्गानन्दकविराजविरचितेऽनुभावनिरूपणो नाम द्वितीयः परिच्छेदः ।

तृतीयः परिच्छेदः।

अथ व्यभिचारिणो निरूप्यन्ते—

**विशेषेणाभितः काये स्थायिनं चारयन्ति ये।**
**अनुभावादिहेतूंस्तान्वदन्ति व्यभिचारिणः।**

यद्वा—

**व्यभिचारणयोगित्वाद्व्यभिचारिण ईरिताः॥ १॥**

व्यभिचारणं व्यापारः। रत्यादेरीषद्व्यक्तस्य प्राकट्यं हि तत्। रसेषु इतस्ततो गामित्वं वा व्यभिचारित्वम्। स्थिरे हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरन्तीति व्यभिचारिणो वा।

के ते पुनरित्याह—

**निर्वेदग्लानिशङ्कामदधृतिसहितापस्मृतिस्वप्नहर्षा-**
**सूयावेगावहित्थाः समरणजडतात्रासनिद्राविबोधाः।**
**चिन्तौत्सुक्यौग्र्यमोहाः श्रममतिसहितामर्षलज्जाविषादा**
**उन्मादव्याधितर्काः स्मरणचपलतादीनतालस्यगर्वाः॥ २॥**

एतेषां क्रमेण लक्षणमाह—

**निर्वेदः स्वावमानः स्यात्—**
**तत्त्वज्ञानाज्जिहीर्षादिर्विभावोऽस्य समीरितः।**
**चिन्तास्वेदप्रकाशाद्या अनुभावाः प्रकीर्तिताः॥ ३॥**

यथा—

पठितं न विवेकवाञ्छया भुवने पर्यटितं दुराशया।
रघुवीरपदानुचिन्तया सफलं नैव जनुः कृतं मया॥ १॥

**—ग्लानिर्निर्बलता मता।**
**रत्यायासो वियोगोऽस्या विभावास्तृट् क्षुधादयः।**
**अनुभावस्तु कार्श्यादिः पुनरस्याः प्रकीर्तितः॥ ४॥**

यथा—

वियोगेनापचीयन्ते तनवोऽस्याः प्रतिक्षणम्।
दिवाकरकरक्रान्ताः कला इव कलानिधेः॥ २॥

**शङ्कानिष्टानुसंधानम्—**
**विभावोऽस्याः परक्रौर्यदुर्णयादिः समीरितः ।**
**अनुभावाः पुनः कम्पस्वक्रियागोपनादयः ॥ ५ ॥**

यथा—

मिथ्याकल्पनशिल्पिनः परिजनाः कान्तः कृतान्तोपमः
　किं चेयं प्रतिवेशिनी मम महाकुत्साभिरुत्साहिनी ।
सख्यो नापि तथा कथासु कुशलाः किं स्यादिति व्यग्रया
　विन्यस्तोऽधरपल्लवे मृगदृशा निश्वस्य लाक्षारसः ॥ ३ ॥

**—हर्षोत्कर्षो मदः स्मृतः ॥ ६ ॥**

उत्कर्षस्तु दुःखासंभिन्नसुखानुभावः ।

**विभावो मदिरापानमस्य धीरेण कथ्यते ।**
**निद्रोत्तमस्य हसितं मध्यमस्याधमस्य च ॥ ७ ॥**
**रोदनादीनि विद्वद्भिरनुभावाः प्रकीर्तिताः ।**

निद्रात्र इन्द्रियसंमोहरूपा घूर्णनादिसादृश्येन निद्रेव निद्रा । हर्षव्यभिचारिभावे नातिव्याप्तिः । तत्र उत्कृष्टनिष्ठाया जातेरभावात् । स तु मनःप्रसादरूपः, मदस्तु मनोमोहस्वरूपः । हर्षे पुलकादयोऽनुभावाः, मदे तु रोदनादय इति जातिस्वरूपानुभावानां भेदादस्य भेदः ।

यद्यपि 'तिष्ठ तिष्ठ क्षणं मूढ मधु यावत्पिबाम्यहम्' इत्यादौ वीररसे मदोऽस्ति, न पुनस्तत्र रोदनादयो दृश्यन्ते, तथापि शृङ्गारे रोदनादयोऽनुभावाः । वीरे तु नयनारुण्यचमत्कारादय इत्यनुभावभेदो रसभेदेन सामान्ये च मदे नेत्रघूर्णनवाक्स्खलनादयश्चानुभावा इति दिक् ।

यथा—

चन्द्रानुविम्बमभितश्चषके निरीक्ष्य
　वाराङ्गनाः परिणतामृतधाममुख्यः ।
निर्विश्य मृद्वदनमत्र पिबत्यजस्रं
　सीधुद्रवानिति हसन्ति परस्परेण ॥ ४ ॥

संतोषो मानसे दुःखा बुद्धिर्वा धृतिरुच्यते ॥ ८ ॥
ज्ञानेष्टाधिगमादिस्तु विभावोऽस्या निगद्यते ।
अनुभावस्तु निर्व्यग्रभोगास्योल्लासनादयः ॥ ९ ॥

यथा—

वाञ्छन्ति केचिदवनीधवतां धनेषु
सौख्यानि कश्चिदनुविन्दतु वन्दनीयः ।
अस्माकमुन्नततपःफलमेतदेव
यद्भिक्षयापि मितया भरणं तनूनाम् ॥ ५ ॥

अपस्मृतिर्मनःक्षेपः—
शून्यस्थितिरपावित्र्यं धातुवैषम्यमेव च ।
दुःखाधिक्यं ग्रहावेशो विभावोऽस्याः प्रकीर्तितः ॥ १० ॥
निश्वासफेनभूपातरसनाचालनानि च ।
लालादयस्तु विद्वद्भिरनुभावाः प्रकीर्तिताः ॥ ११ ॥

यथा—

खे खेलद्बककैतवेन परितो मुञ्चन्ति फेनोच्चयं
स्यन्दन्ते प्रविलोलयन्ति रसनाः सौदामिनीच्छद्मना ।
लालाः किं च समुद्गिरन्ति पयसां धारापदेशादमी
मूर्च्छन्ति ग्रहवर्त्म निग्रहकृतावेशा इवाम्भोधराः ॥ ६ ॥

अत्रैव मूर्च्छान्तर्भावः ॥

—निद्रां प्राप्तस्य देहिनः ।
विषयानुभावोऽस्तु स स्वप्नः संकथ्यते बुधैः ।

त्यक्त्वान्यदिन्द्रियं मनस्त्वचि यदा वर्तते तदा स्वप्नः ।

विभावोऽत्र क्रमालस्ये स्वभावपरिचिन्तनम् ॥ १२ ॥
अनुभावाः पुनर्नेत्रस्पन्दो भ्रूचलनं तथा ।
भ्रमोक्तिः पार्श्वकरणं स्वप्नालोकादयो मताः ॥ १३ ॥

यथा—

उपायातस्तल्पं मम कुसुमकल्पं मधुरिपुः
समारेभे वाचा मधुरसमुचा चाटुशतकम् ।

अथारब्धे माने सहचरि मयानेककपटा-
　　द्विधाता मन्निद्रामहरत तदानीमसहनः ॥ ७ ॥

**मनःप्रसादो हर्षः स्यात्—**
**विभावोऽत्र प्रियालोकपुत्रजन्मादिरेव च ।**
**अनुभावास्तु धीरेण रोमाञ्चादय ईरिताः ॥ १४ ॥**

यथा—

गोप्योऽपि तं मधुरवेणुनिनादमुच्चैः
　　श्रुत्वा तदा मनसि विस्मृतसद्मकृत्याः ।
स्विद्यद्वपुः पुलकपालिपरीतगात्राः
　　कृष्णस्य चारु चरितं ललितं जगुस्ताः ॥ ८ ॥

**—परोत्कर्षासहिष्णुता ॥ १५ ॥**
**परानिष्टचिकीर्षा वासूयाधीरेण कथ्यते ।**
**विभावोऽस्यास्तु दौर्जन्यं मदादिः कथ्यते बुधैः ॥ १६ ॥**
**अनुभावा भ्रुवो भेदो दोषोद्घोषादयो मताः ।**

यथा—

प्रतिपक्षमृगीदृशा समं रममाणं दयितं शरन्निशि ।
समुदीक्ष्य वधूः कुरु ध्वनीनिति वेत्रेण निहन्ति कुक्कुटम् ॥ ९ ॥

**आकस्मिकेष्टानिष्टाप्तेरावेगः संभ्रमो मतः ॥ १७ ॥**
**तद्विभावा अभीष्टार्थश्रुत्यरिप्रेक्षणादयः ।**
**अनुभावास्त्वरा देहवसनस्खलनादयः ॥ १८ ॥**

यथा—

श्रुत्वा सूर्यसुतानिकुञ्जकुहरोद्भूतं मुरद्रोहिणः
　　संकेतागमनाय वेणुनिनदं न प्रेक्षितो दुर्जनः ।
वासो विस्खलितं न संवृतमथ व्यस्तोऽसमूलद्वये
　　बद्धो नैव कचः पुरः प्रचलितं प्रेमान्धया राधया ॥ १० ॥

**अवहित्थाकारगुप्तिः—**
**विभावोऽत्र भयं लज्जा गौरवादिः प्रकीर्तितः ।**
**अनुभावोऽन्यसंभाषान्यथाकारोऽन्यदर्शनम् ॥ १९ ॥**

यथा—

भीमो भीमपराक्रमो मुरजिता संबद्धसख्योऽर्जुन-
स्तस्माद्भूमिरियं विभज्य भवता धर्मात्मने दीयताम् ।
इत्युक्तिं विनिशम्य संसदि गुरोर्द्रोणस्य दुर्योधनः
स्मेरस्मेरमुखः शिखण्डिनिवहं नृत्यन्तमालोकते ॥ ११ ॥

**—मरणं प्राणनिर्गमः ।**
**विभावा अत्र धीरेण शरपातादयो मताः ।**
**अनुभावाः पुनः प्रोक्ताः पृथिवीपतनादयः ॥ २० ॥**

यथा—

कृष्णेन पातितां भूमौ पूतनां वीक्ष्य बल्लवाः ।
मानसे मेनिरे भ्रष्टामिव कंसजयश्रियम् ॥ १२ ॥

**जडताशेषकर्तव्याक्षमज्ञानत्वमुच्यते ।**

कर्तव्येति व्यवहारेत्यर्थः ।

**विभावास्तत्र गदिता इष्टानिष्टेक्षणादयः ॥ २१ ॥**
**इष्टानिष्टापरिच्छेदनिर्निमेषेक्षणादयः ।**
**अनुभावा निगदितास्तत्रालंकारवेदिभिः ॥ २२ ॥**

मूर्च्छापस्मारनिद्राभ्यो ज्ञानविरहादस्या भेदः । त्रासालस्यभीतिभ्यः कतिपयव्यवहारसत्त्वादस्याः पुनर्भेदः । यथा—

कुम्भकर्णवपुषोऽतिमहत्त्वं वृद्धविन्ध्यधरणीधरतुल्यम् ।
निर्निमेषनयनाः कपिवर्गा वीक्ष्य चित्रलिखिता इव तस्थुः ॥ १३ ॥

**त्रासो मानसविक्षोभः—**

आकस्मिको मनोविक्षोभस्त्रासः । विचारेण मनोविक्षोभो भीरिति विशेषः । तत्र—

**विभावा घोरसत्त्वादिदर्शनश्रवणादयः ।**
**अनुभावास्तु रोमाञ्चकम्पस्तम्भादयो मताः ॥ २३ ॥**

यथा—

कर्णोऽभ्येत्ययमित्युदीर्य सुखितां मे त्वद्गुणाकर्णना-
दित्यादिस्तुतिमाचरन्ति कवयो यावद्भवद्वैरिणाम् ।

तावत्ते भवदागमभ्रमभृतः श्रीकर्ण भूमीपते
वेपन्ते गमने स्खलन्ति बहुशो गच्छन्ति कुञ्जोदरम् ॥ १४ ॥

**—निद्रा चेतोनिमीलनम् ॥ २४ ॥**

**विभावास्तत्र कथिताः श्रमालस्यमदादयः ।**
**अनुभावाः समुच्छ्वासजृम्भाक्षिमिलनादयः ॥ २५ ॥**

यथा—

जृम्भारम्भविजृम्भमानदशनज्योत्स्नाभिरामानना-
मीषद्गात्रविवर्तविश्लथभुजावल्लीमुदञ्चद्वलीम् ।
अर्धोन्मीलितलोचनामनिभृतं निश्वासमातन्वती-
मुत्स्वप्नायितविभ्रमं विदधती तां संस्मरामि प्रियाम् ॥ १५ ॥

**विबोधश्चेतनावाप्तिः—**
**निद्राभ्रंशो विभावोऽत्रानुभावाः कथिताः पुनः ।**
**जृम्भाङ्गाकृष्टिदृङ्मर्दा अङ्गुलिस्फोटनादयः ॥ २६ ॥**

यथा—

जृम्भाविसर्पितसुगन्धसुवासिताश-
मङ्गुष्ठमूलपरिमर्दितनेत्रयुग्मम् ।
प्रातर्मुरारिपरिदर्शितदर्पणं वः
क्षेमं करोतु वदनं कमलालयायाः ॥ १६ ॥

**—चिन्ता ध्यानं निगद्यते ।**

ध्यानं चित्तैकाग्रता । तेन स्मृतौ नातिव्याप्तिः ।

**इष्टानशादयस्तत्र विभावाः परिकीर्तिताः ।**
**अनुभावाः पुनस्तापपाण्डुताशून्यतादयः ॥ २७ ॥**

यथा—

तापो गात्रं ग्लपयति तव श्वासधाराधिका ते
ज्ञातेऽप्यर्थे न च परिचयोद्भावनं दृश्यते ते ।
किं च क्षामा भवति भवती प्रत्यहं पाण्डुकान्ति-
र्जानीमस्ते वपुरुपगता कापि चिन्तापिशाची ॥ १७ ॥

**कालासहिष्णुतौत्सुक्यम्—**
**प्रियस्मृत्यादयस्तत्र विभावाः कथिता बुधैः ।**
**चित्रतापत्वरादीर्घनिश्वासस्वेदबिन्दवः ।**
**वपुर्गौरवतन्द्राद्या अनुभावाः प्रकीर्तिताः ॥ २८ ॥**

यथा—

न नितम्बगुरो गतिक्रियायां कुरु विघ्नं हरिरस्ति कुञ्जभूमौ ।
यदि तस्य मुखं विलोकयेयं त्वयि धास्ये रसनां तदा सरलाम् ॥ १८ ॥

**—औग्र्यं निष्कृपता मता ॥ २९ ॥**
**तत्र शौर्यापराधाद्या विभावाः परिकीर्तिताः ।**
**अनुभावाः शिरःकम्पतर्जनादय ईरिताः ॥ ३० ॥**

यथा—

उद्दामद्युतिदुर्दिनीकृतसमिद्युद्धावरुद्धद्विष-
त्संदत्तद्रुतचित्तसाध्वसरसा सेयं गदा निर्दया ।
वक्षः कृष्टवतः पतत्वधिशिरो दुःशासनस्याद्यत-
त्पाञ्चालीचिकुरं चिराय विततं बध्नातु निर्बन्धतः ॥ १९ ॥

**मोहो विचित्रता—**
**दुःखावेगार्थचिन्ताद्या विभावास्तत्र भाषिताः ॥ ३१ ॥**
**अनुभावाः पुनर्गात्रघूर्णनादर्शनादयः ।**

यथा—

यामीत्यप्रियवादिनि प्रियतमे कम्पैर्वपुर्व्याचितं
पादादेकपदावलम्बिनि पुनर्भ्रष्टं करात्कङ्कणम् ।
दृग्विच्छेदपथं गते पुनरविज्ञातात्मदुःखोद्धते-
र्वात्येवाङ्गलता जुघूर्ण सहसा तस्याः कुरङ्गीदृशः ॥ २० ॥

**—खेद आयासप्रभवः श्रमः ।**
**रतिगत्यादयस्तत्र विभावा गदिता बुधैः ॥ ३२ ॥**
**अनुभावाः पुनर्दीर्घश्वासस्वेदादयो मताः ।**

यथा—

माला म्लानरुचिर्विलोचनयुगं निष्पन्दतामागतं
व्यस्तोऽसौ परितः सरोरुहदृशो धम्मिल्लमल्लोत्तमः ।

भग्नं कङ्कणमङ्कतस्तु कुचयोः श्रीखण्डलेपो गतः
साधु श्वास सखे तदेव हि तव प्राखर्यमुज्जृम्भते ॥ २१ ॥

**नयमार्गानुसरणादर्थनिर्धारणं रतिः ॥ ३३ ॥**
**शास्त्रचिन्तादयस्तत्र विभावाः पण्डितैर्मताः ।**
**करचालनशिक्षाद्या अनुभावाः प्रकीर्तिताः ॥ ३४ ॥**

यथा—

त एव जगदाराध्यास्त एव सदनं श्रियः ।
ये मुरारिपदाम्भोजचिन्तया गमयन्त्यहः ॥ २२ ॥

उपदेशोपालम्भनयविनयानुनया(?)मतावन्तर्भवन्ति ।

**हितैषितयाज्ञातज्ञापनमुपदेशः ।**

यथा—

भक्तिर्गुरौ विधेया गेया कीर्तिः सदा विष्णोः ।
अपवादादवधेयं खलसंगमनं त्वया हेयः ॥ २३ ॥

**अपराधज्ञानमुपालम्भः ।**

यथा—

अङ्गे वह्निस्फुलिङ्गप्रतिमशरशतं वर्षतः प्रौढहर्षा-
द्वात्सल्यं मीनकेतोर्मयि नियतिहते मास्तु ते निर्दयस्य ।
अस्त्रं सर्वस्वभूतं भुवनजयकृते यत्र वास्ति प्रसूतं
तस्मिन्देहेषु भस्मीभवति तव कथं नानुकम्पाप्रकाशः ॥ २४ ॥

यथा वा—

मो[1]ञ्छा हेउ त्तण मिह जुज्जइ विस सोअरम्मि चन्दम्मि ।
सिरिहंड रण वधूतं सि कहं पुण पवण तावेसि ॥ २५ ॥

इत्यनेकदिशोपालम्भस्य बहवो भेदा भवन्ति । ते च ग्रन्थगौरवभयादिह नोक्ताः ।

**सामदानाद्युपायव्यवस्थितिर्नयः ।**

यथा—

यदपि स्तुतोसि साम्ना तदपि न चेन्दो जहासि तापकताम् ।
जीवधनं प्रियविरहे लज्जाकरमेतदादत्स्व ॥ २६ ॥

---

१. अस्याश्छाया न स्फुटा.

**संतोषप्रकाशकः क्रियाविशेषो विनयः ।**

यथा—

मा संभावय मां गिरा मधुरया कुर्यां न चित्तोत्सवं
वातान्दोलविलोलपङ्कजदलद्रोहस्पृशा वा दृशा ।
आयाते मयि यच्चकार भवती कृत्यौचिती संभ्रमं
तेनैवाद्य ममेन्दुसुन्दरमुखि स्वात्मा महेन्द्रीयति ॥ २७ ॥

**अपराधक्षमापनमनुनयः ।**

यथा—

कान्ते स्वान्ते कथय विहितः कोऽपराधो मया ते
यस्मान्नालीजनहितवचः कर्णपालीमुपैति ।
मानम्लानं न कुरु वदनं पश्य नो कस्य चित्ते
धत्ते मोदं मनसिजमहासिद्धिरम्भोधरश्रीः ॥ २८ ॥

**परगर्वक्षयप्रौढसमीहामर्ष उच्यते ॥ ३५ ॥**
**निन्दाक्षेपापमानादिविभावोऽत्र समीरितः ।**
**अनुभावः शिरःकम्पनयनारुण्यतादयः ॥ ३६ ॥**

यथा—

भवेदाज्ञा भर्तुर्यदि समरदीक्षागुरुरहं
त्रसत्पौरारब्धप्रखरतरहाहाध्वनिमतीम् ।
तदा लङ्कां शङ्काकुलदशमुखाश्लेषसहितां
पयोधौ प्रक्षिप्य प्रलयमिह कुर्यां पलभुजाम् ॥ २९ ॥

**धाष्टर्याभावो भवेल्लज्जा—**
**दुराचारादयस्तत्र विभावाः कथिता बुधैः ।**
**अनुभावाः पुनः प्रोक्तास्तत्राक्षिनमनादयः ॥ ३७ ॥**

यथा—

पृष्टायाः कुतुकवशात्किमपि रहस्यं सरोजनेत्रायाः ।
नमितविलोचनयुग्मं स्मरामि निभृतस्मितं वदनम् ॥ ३० ॥

—विषादः सत्त्वसंक्षयः ।

**विभावास्तत्र कथिता उपायागमनादयः ।**
**उपायचिन्तनं श्रेष्ठे मध्यमे विमनस्कता ॥ ३८ ॥**
**अधमे मुखशोषादिरनुभावः समीरितः ।**

यथा—

गेहाद्बहिर्यदि मनागपि संचलामि
　श्वश्रूस्तदा मयि करिष्यति दुष्टतर्कम् ।
तिष्ठामि चेदिह तदा यमुनानिकुञ्ज-
　वर्ती हरिर्मम वचांस्यनृतानि वेत्ति ॥ ३१ ॥

**चेतसो भ्रम उन्मादः—**
**विभावाः कान्तविश्लेषसंपन्नाशादयो मताः ।**
**अनुभावा वृथाक्रन्दवृथाहास्यादयो मताः ॥ ३९ ॥**

यथा—

उन्मीलत्कुसुमानि पश्यति मुहुस्तस्याः स्मितस्याशया
　वीरुत्पल्लवमुल्लसत्करधिया धर्तुं पुनर्धावति ।
बुद्ध्या तद्वचसः पिकस्य विरुते दत्ते तदैवोत्तरं
　सङ्गः किं न करोति भिन्नहृदयः पञ्चेषुपञ्चेषुभिः ॥ ३२ ॥

**—ज्वरादिर्व्याधिरुच्यते ॥ ४० ॥**
**धातुप्रकोपकामोत्थक्लेशभीत्यादयो मताः ।**
**विभावा अनुभावास्तु शरीरोत्कम्पनादयः ॥ ४१ ॥**

यथा—

मा शीतोदकशीतलैर्मलयजक्षोदैर्मनोजानल-
　ज्वालां दीपय किं च वार्धय नवा तां तालवृन्तानिलैः ।
सोऽयं निर्दयमानसो यदुपतिर्लब्धावकाशोऽधुना
　संतापज्वरजर्जरात्सखि हृदो हा हन्त निर्यास्यति ॥ ३३ ॥

**तर्को विचारः ।**
**तत्र विप्रतिपत्त्यादेः समुद्भावनमुच्यते ।**
**विभावोऽथानुभावश्च भ्रूशिरोऽङ्गुलिनर्तनम् ॥ ४२ ॥**

आदिशब्दात्संशयसाधकबाधकसमुद्भावनादयो गृह्यन्ते । वितर्कश्चतुर्विधः—**विप्रतिपत्त्यात्मा संशयात्मा विचारात्मा अनध्यवसायात्मा** चेति ।

**उत्कटकोटिकः संशयोऽनध्यवसायात्मा ।**

क्रमेणोदाहरणं यथा—

किं कल्पद्रुमपल्लवं भुजजयस्तम्भस्य किं तोरणं
किं वा लोकदृशां रसायनपुटं किं वा कुटीरं त्विषाम् ।
श्रीमत्कर्णमहेन्द्र [देव] भवतः किं कीर्तिमुक्ताखनिः
किं वा बाहुभुजङ्गमाधिपफणा किं वा करस्तावकः ॥ ३४ ॥

अयं कः कोदण्डं वहति परिपूर्णो हिमकरः
कुरङ्गस्तत्रायं कथय हृदयं मोहयति कः ।
इदं किं वा चक्रद्वयमुपरि धत्ते सुरधुनी-
मधस्तस्येयं का वद मधुपपङ्क्तिर्विजयते ॥ ३५ ॥

राधाचक्रमिदं धनुर्धरधराधीशातिगर्वापहं
दायादव्यसनोपशान्तविशिखाभ्यासोऽधुना फाल्गुनः ।
एते कर्णमुखाः खलाः परिसरे तिष्ठन्ति तत्केवलं
बीभत्सोरिह साहसस्य फलदं भावि द्विजाशीर्वचः ॥ ३६ ॥

एतद्वारिरुहं भवेदिह पुनः पाथो न संदृश्यते
चन्द्रोऽयं हरते दृशौ दिशि सरत्यस्य प्रकाशोऽहनि ।
आनन्दः प्रकटीभवत्ययमितः सोऽमूर्तिमान्विश्रुतः
कान्तालम्बिमुखं किमेतदिति मे चेतो मुहुर्मुह्यति ॥ ३७ ॥

**—संस्कारजन्यं ज्ञानं स्मृतिर्भवेत् ।**
**सदृशज्ञानचिन्ताद्या विभावास्तत्र कीर्तिताः ।**
**अनुभावाः पुनः प्रोक्ता भ्रूसमुन्नयनादयः ॥ ४३ ॥**

संस्कारजन्यत्वेन प्रत्यभिज्ञायास्तु संग्रहः ।

प्रत्यभिज्ञा यथा—

उन्नमति भ्रूयुगलं तव पुलकं गात्रमुद्वहति ।
तस्मादिह सखि कंचित्पुरानुभूतं विलोकयसि ॥ ३८ ॥

स्मृतिर्यथा—

गन्तुं तावत्परवशतया नो तयाहं निषिद्धः
प्रत्यावृत्त्यै छलविरचितप्रार्थनं चिन्तयन्त्याः ।
यत्ताम्बूलोपहरणमिषादञ्जलिर्मञ्जुलाक्ष्याः
प्रारब्धो मे गमनसमये शल्यतुल्यं तदन्तः ॥ ३९ ॥

**क्रियाशैघ्र्यं चपलता–**
**द्वेषरागादयस्तत्र विभावाः परिकीर्तिताः ।**
**अनुभावास्तु पारुष्यस्वच्छन्दाचरणादयः ॥ ४४ ॥**

यथा—

तृष्णा तुङ्गतरङ्गसङ्गगहने संसारवारांनिधौ
दुष्पारे प्लवनात्सदैव भवता खेदः परं लभ्यते ।
दुष्कर्माचरणावलीकृतमहासंतापसंतापिनी
रे चित्त रऽऽ....च(?)डिकाचरणयोश्चिन्ताः किमुत्ताम्यसि ॥४०॥

**–दुःखाधिक्यं तु दीनता ॥ ४५ ॥**
**विभावास्तत्र विश्लेषदुर्गतत्वादयो मताः ।**
**अनुभावाः समाख्याताः कायक्लेशादयः पुनः ॥ ४६ ॥**

यथा—

असुशरणमकाण्ड एव कण्ठस्तनुशरणं नवपल्लवं हिमं च ।
शिव शिव शरणं न किंचिदक्ष्णोर्भवति भवत्पथमन्तरेण तस्याः ॥ ४१ ॥

**कर्तव्याशक्तिरालस्यं–**
**गर्भादयो निगदिता विभावास्तत्र सूरिभिः ।**
**अनुभावाः पुनः ख्याताः क्रियाकातरतादयः ॥ ४७ ॥**

यथा—

प्रेरयति नैव हस्तं समीपमानेतुमिष्टमपि वस्तु ।
पश्यति निभृतनिमेषं गर्भवती कातरा गौरी ॥ ४२ ॥

**–गर्वः सर्वाधिकत्वधीः ।**
**विभावास्तत्र लावण्यबलैश्वर्यादयो मताः ।**
**अनुभावाः पुनः प्रोक्ताः पौरुषख्यापनादयः ॥ ४८ ॥**

यथा—

यावच्छ्वाससमीरणो बहिरितो निर्याति नासापुटा-
 ल्लोकानां नयनाम्बुजेषु वलते यावन्निमेषोदयः।
द्रोणद्रोणिविकर्णकर्णनिखिलक्षोणीश्वरै रक्षितं
 तावत्पश्य सुयोधनस्य सकलं व्यापादयामो वयम् ॥ ४३ ॥

कस्मिन्रसे के व्यभिचारिण इत्याकाङ्क्षायामाह—

**न संभोगे जुगुप्सा तु न चालस्यं न चोग्रता।**
**विप्रलम्भे श्रमग्लानिनिर्वेदाः स्मृत्यपस्मृती ॥ ४९ ॥**
**शङ्कानिद्रा तथौत्सुक्यमुन्मादो जडता तथा।**
**सुप्तं विबोध आलस्यविषादव्याधयस्तथा ॥ ५० ॥**
**दैन्यमोहौ तथा त्रास एते स्युर्व्यभिचारिणः।**
**हास्येऽवहित्थालसता प्रबोधा व्यभिचारिणः ॥ ५१ ॥**
**करुणे मोहनिर्वेददैन्यजाड्यान्यपस्मृतिः।**
**विषादश्च तथा व्याधिर्भ्रम उन्माद एव च ॥ ५२ ॥**
**मरणं च तथालस्यं भवति व्यभिचारिणः।**
**रौद्रे स्मृतिश्चपलतावेगामर्षादयोग्रता ॥ ५३ ॥**
**उत्साहस्मृतिगर्वाख्या भवन्ति व्यभिचारिणः।**
**वीरेऽमर्षस्तथावेगगर्वौग्र्यादिमतिस्तथा ॥ ५४ ॥**
**वृत्तिस्तथैव धीरेण कथिता व्यभिचारिणः।**
**भयानके चपलतास्वेदस्तम्भाविवर्णताः ॥ ५५ ॥**
**शङ्कागद्गदतामोहावेगप्रलयमूर्च्छनाः।**
**रोमाञ्चापस्मृती दैन्यत्रासौ स्युर्व्यभिचारिणः ॥ ५६ ॥**
**बीभत्सेऽपस्मृतिर्व्याधिरावेगोऽपि मतिस्तथा।**
**तथा ग्लानिश्च मोहश्च विज्ञेया व्यभिचारिणः ॥ ५७ ॥**
**हर्षादयोऽद्भुते ज्ञेयाः शान्तेऽपि व्यभिचारिणः।**
**यस्मिन्रसे येऽनुकूलास्ते ज्ञेया व्यभिचारिणः ॥ ५८ ॥**

स्थायिपदव्यपदेश्या शृङ्गारे रतिरनुच्छिन्ना ।
हासः पुनरुत्पाद्यो व्यभिचारी तत्र कथ्यते धीरैः ॥ ५९ ॥

तदुक्तम्—

'रसावस्थः परं भावः स्थायितां प्रतिपद्यते ।'

हासः पुनरुत्पाद्यमानो व्यभिचार्येव । व्यभिचारिलक्षणयोगात् ।

तत्राह—

स्थायिनोऽपि रसे क्वापि भवन्ति व्यभिचारिणः ।
क्रोधो वीरे रतिः शान्ते हास्येऽपि करुणे तथा ॥ ६० ॥
हासो भयं तथा शोकः शृङ्गारे परिकीर्तितः ।
भयानके जुगुप्सा स्यादुत्साहो रौद्रहास्ययोः ॥ ६१ ॥
शान्ते जुगुप्सा कथिता हासो वीरे प्रकीर्तितः ।
उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणौ ॥ ६२ ॥

अथ दशाः—

अभिलाषः स्मृतिश्चिन्ता प्रलापो गुणकीर्तनम् ।
उन्मादो जडता व्याधिरुद्वेगो मृतिरेव च ॥ ६३ ॥
विपश्चिता निगदिता एताः कामदशा दश ।
औत्सुक्येनाभिलाषस्तु गतार्थः कथितो बुधैः ॥ ६४ ॥
गुणाख्यानात्मकस्मृत्या गतार्थं गुणकीर्तनम् ।
उन्मादेन प्रलापस्तु व्याप्तोऽन्यत्प्रागुदाहृतम् ॥ ६५ ॥

इति श्रीमहाराजाधिराजश्रीकर्णसिंहकारिते मैथिलश्रीगङ्गानन्दकविराजविरचिते कर्णभूषणे व्यभिचारिभावनिरूपणो नाम तृतीयः परिच्छेदः ।

---

## चतुर्थः परिच्छेदः ।

रसानामनुकूलो यो विकारो भाव एव सः ।
विकारस्त्वन्यथा भावः स पुनर्द्विविधो मतः ॥ १ ॥

अन्यच्च।

**नानाभिनयसंबद्धान्भावयन्ति रसान्यतः।**
**तस्माद्भावा अमी प्रोक्ताः स्थायिसंचारिसात्त्विकाः॥ २॥**

तदुक्तम्—

'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्।'

सात्त्विकव्यभिचारिभावौ प्रागुक्तौ। इदानीं स्थायिभावमाह—

यद्वा—

**विरुद्धैरविरुद्धैर्वा यो भावैर्न पिधीयते।**
**आस्वादाङ्कुरकन्दः स स्थायिभावः प्रकीर्तितः॥ ३॥**

यद्वा—

**सजातीयविजातीयैर्भावैर्यो न पिधीयते।**
**सोऽन्यभावात्मभावत्वग्राहकः स्थायिशब्दभाक्॥ ४॥**

अन्येति। अन्येषां भावानामात्मीयभावत्वग्राहक इत्यर्थः। रत्यादीनां स्थायिनां निर्वेदादयो व्यभिचारिणः, पुलकादयः सात्विकाश्च भावाः, इति सर्वजनसिद्धा प्रतीतिः। ननु निर्वेदादीनां पुलकादीनां सात्त्विकादीनां वा रत्यादयो भावाः। नन्वेवं हर्षादावतिव्याप्तिरिति चेत्, न। तस्य सजातीयविजातीयैस्त्रासादिभिरभिभाव्यत्वात्।

तद्भेदानाह—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चाष्टौ स्थायिनो नवमः शमः॥ ५॥**
**अभिव्यञ्जकवैकल्पादसंपूर्णा रसा अमी।**

अमी रत्यादयः। अभिव्यञ्जका विभावानुभावव्यभिचारिणः प्रागुक्ताः।

क्रमेणैषां लक्षणमाह—

**मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः॥ ६॥**

यथा—

सत्पात्रस्थोऽप्युपचितवपुःस्नेहसंभारयोगा-
दुद्यन्नेव प्रतिहतमनोदुःखदीर्घान्धकारः।

दोलाखेलां पिशुनपवनैर्नीयमानः कियन्तं
कालं तिष्ठेत्परिमितदशः सुभ्रुवः प्रेमदीपः ॥ १ ॥

अत्र परिमितदशत्वादपूर्तिः ॥

**वागादिवैकृतैश्चेतोविकासो हास इष्यते ।**

**यथा—**

बालोऽयं चारुनीलोत्पलमृदुलतनुश्चेत्पतेदस्य हस्ता-
तुङ्गो गोवर्धनोऽसौ वयमिह हि तदा चूर्णिताः स्याम सर्वाः ।
इत्थं प्रोद्यद्भयानां व्रजहरिणदृशां मानसाश्वासनाय
प्रोद्यत्किंचिदुक्तं चिरमवतु दरस्मेरमास्यं हरेर्वः ॥ २ ॥

अत्र दरशब्दोपादानादपूर्णः ॥

**इष्टनाशादिभिश्चेतो वैक्लव्यं शोक उच्यते ॥ ७ ॥**

**यथा—**

अवलोकयतो धरां विदूरात्तरणेरुग्रकरावलीविदीर्णाम् ।
जलबिन्दुमिषेण वारिदानां बत बाष्पस्य कणः समुज्जिहीते ॥ ३ ॥

अत्र कणपदादपरिणतः ॥

**प्रतिकूलेषु तैक्ष्णस्य विबोधः क्रोध उच्यते ।**

**यथा—**

उत्क्षिप्योच्चैः सकलसलिलान्यम्बुराशेः कराभ्यां
सेनामेनां गमनसरणिं दर्शयन्नेत्यलङ्काम् ।
किंचिद्बद्धभ्रकुटिकुटिलो राक्षसाधीशवक्षः
सोऽहं हेलाविजितपविना मुष्टिना स्फोटयामि ॥ ४ ॥

अत्र किंचिद्बद्धभ्रकुटीति विशेषणादपूर्णः ॥

**कार्यारम्भेषु संरम्भः स्थेयानुत्साह इष्यते ॥ ८ ॥**

युद्धवीरोत्साहो यथा—

पुत्रभ्रातृसुहृद्गणैः सह समायान्तं रणे रावणं
कोषोत्पाटितचन्द्रहासरुचिभिर्विध्वंसयन्तं तमः ।

तं दृष्ट्वा पुलकोच्चयाञ्चिततनुः किंचिद्धृणाघूर्णिता-
मानन्दाश्रुपरिप्लुतां रघुपतिश्चिक्षेप चापे दृशम् ॥ ५ ॥

अत्र किंचित् घृणाघूर्णितामिति विशेषणादपूर्णः ॥

दानवीरोत्साहो यथा—

सप्तद्वीपवती त्वया भगवता दत्ता धरित्री पुनः
सप्ताधो भुवनानि देहि सपदीत्याकर्ण्य विप्रोदितम् ।
मीमांसातिवशीकृतेन मनसा हस्तेन जग्राह त-
त्संकल्पाय दृशोः प्रमोदसलिलं देवो भृगूणां पतिः ॥ ६ ॥

अत्र मीमांसोपन्यासादपरिपूर्णः ॥

दयावीरोत्साहो यथा—

दारिद्र्यदर्शनपयःप्रतिवर्धिताया
दीनं दृशा कलयतो भृगुनन्दनस्य ।
स्नेहस्मितद्युतिमिषेण कृपालुतायाः
प्रादुर्बभूव कुसुमस्तबकप्ररोहः ॥ ७ ॥

अत्र प्ररोहशब्दादपूर्णः ॥

**भयं चित्तस्य वैक्लव्यं रौद्रादिजनितं विदुः ।**

रौद्रः सिंहादिः । यथा—

करी शोणे समुद्वीक्ष्य कण्ठीरवशिशोर्दृशौ ।
स्वल्पशुष्यन्मदश्चक्रे पलायितुमुपक्रमम् ॥ ८ ॥

अत्र स्वल्पपदादपरिणतम् ॥

**जुगुप्सा गर्हितार्थानां दोषसंदर्शनादिजा ॥ ९ ॥**

यथा—

संध्यापयोदपललं समुदीक्ष्य दूरा-
त्तारास्थिखण्डपटलं च नभो विकीर्णम् ।
गर्हायुता इव हरिद्वनिताः पिधातुं
प्रारेभिरे निजमुखानि तमोंशुकेन ॥ ९ ॥

अत्र इवपदादसंपूर्णः ॥

**विस्मयश्चित्तविस्तारः पदार्थातिशयादिभिः ।**

यथा—

वीर्योद्रेकैस्त्रिभुवनमिदं शक्यते यैर्विजेतुं
　तेषां राज्याद्वननिवसतिं पाण्डवानां निरीक्ष्य ।
आसीच्चित्रार्पित इव गुरुर्द्रोणमुख्यो न तादृ-
　ग्जातो भीष्मः श्रुतिगतहरिश्चन्द्रभूभृच्चरित्रः ॥ १० ॥

अत्र न तादृक्पदादपूर्णः ॥

**शमो निरीहावस्थायां स्वात्मविश्रामजं सुखम् ॥ १० ॥**

यथा—

ध्यायंस्तेजः परं हेम्नि मृत्खण्डे समदर्शनः ।
निर्विण्ण इव लोकेषु नयामि समयं कदा ॥ ११ ॥

अत्र निर्विण्ण इति पदादपरिपूर्णः ॥

शृङ्गारादौ चमत्कारदर्शनादनुमीयते । किं तदित्याह—

**मनोविकारो मुख्योऽस्ति यत्र तत्राद्भुतो रसः ।**
**यत्रामुख्यः पुनस्तत्र शृङ्गाराख्यो रसो भवेत् ॥ ११ ॥**

मुख्यो यथा—

अपूर्णोऽयं राकारमणरुचिराकारविजयी
　विधुः स्वाङ्के रङ्गी नटयति कुरङ्गीयुगमिदम् ।
धुनोत्याहो पाशं प्रचलमधुपाशङ्कनकरं
　न जानीमो मायामतनुरयमायाति कियतीम् ॥ १२ ॥

अत्र विस्मयस्य प्राधान्यादद्भुतोऽङ्गी, शृङ्गारोऽङ्गम् ॥

अमुख्यो यथा—

नटयति नयनं वरोरुचेतो हरति परं मम कोऽपि खञ्जरीटः ।
वदनमभिमुखीकरोमि बाले कलयति कोऽपि कुतूहलं कलावान् १३

अत्र शृङ्गाराङ्गमद्भुतो गौणः ॥

इति श्रीमहाराजाधिराज**श्रीकर्णसिंह**कारिते मैथिल**श्रीगङ्गानन्द**कविराजविरचिते **कर्णभूषणे** स्थायिभावनिरूपणो नाम चतुर्थः परिच्छेदः ।

## पञ्चमः परिच्छेदः।

अथ रसो निरूप्यते—

**विभावेनानुभावेन तथैव व्यभिचारिणा।**
**अभिव्यक्तीकृतस्थायी रस इत्यभिधीयते॥ १॥**

लोके ये कारणकार्यसहकारिणोऽभिधीयन्ते त एव विभावानुभावव्यभिचारणरूपव्यापारवन्तः, काव्ये नाट्ये चालौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्या भवन्ति, तैरभिव्यक्तीकृतो रत्यादिः स्थायिभावो रस इति संज्ञां लभते इत्यर्थः॥

ननु किंनिष्ठो रस इत्याह—

**साधारण्याद्विभावाद्यैः प्रतीतैः सभ्यचेतसि।**
**अभिव्यक्तो दधिन्यायात्स्थायी रत्यादिको रसः॥ २॥**

साधारण्यात् प्रतीतैः प्रतीयमानैः सभ्यचेतसि सभ्यात्मनि दधिन्यायात् यथा दुग्धमेवाम्लसंयोगेन दधिसंज्ञां भजते, तथा विभावादिसंयोगेन स्थायी रत्यादिरेव रसपदाभिधेयतां लभते। अयमर्थः—विभावादिज्ञानदशायां रत्यादेः स्थौल्यमाविर्भावो रसपदव्यवहार्यत्वात्। विभावाद्यज्ञानदशायां सौक्ष्म्यं तिरोभावः॥

स्थायिपदव्यपदेश्यत्वाच्च साधारण्यमाह—

**स्वीयत्वपरकीयत्वतटस्थीयत्वबुद्धयः।**
**यदा तेषु न जायन्ते साधारण्यं तदा मतम्॥ ३॥**

तेषु विभावादिषु। अयमर्थः—एते विभावादयो मदीया एव न मदीया एव, परकीया एव न परकीया एव, तटस्थीया एव न तटस्थीया एवेति नियतसंबन्धापरिचयात्साधारण्यम्॥

**काव्याभिनयरूपाणामुपायानां स्वभावतः।**
**साधारण्यं विभावादेरसाधारणतावतः॥ ४॥**
**साधारण्ये त्वनुभवः प्रमाणं सभ्यचेतसि।**
**अलौकिकविभावादिशब्दवाच्या अतोऽप्यमी॥ ५॥**

यतो माधवादिगता एवासाधारणा अमी कारणादयः सभ्येन सकलसाधारण्येन प्रतीयन्ते, अतश्चालौकिकविभावादिशब्दव्यपदेश्या भवन्तीत्यर्थः ॥

स्थायिनां साधारण्यमाह—

रत्यादिना विभावादिसाधारण्यधियः क्षणे ।
सभ्यमात्रात्मनिष्ठत्वाभावात्साधारणेन च ॥ ६ ॥
स्वगोचरीकृतो ब्रह्मास्वादसौख्यसहोदरः ।
अलौकिकचमत्कारः स्वप्रकाशसुखात्मकः ॥ ७ ॥
प्रपानकरसन्यायाच्चर्व्यमाणो रसो मतः ।
विविच्य ग्रहणं यस्माद्विभावादेर्न जायते ॥ ८ ॥
अलक्ष्यक्रमव्यङ्ग्यत्वमत एव रसे मतम् ।
रसोऽतः पानकरसं दृष्टान्तीकृत्य साधितः ॥ ९ ॥
पानके तु मरीचादेर्न विशिष्य ग्रहो भवेत् ।
तथैवात्र विभावादेर्न विशिष्य ग्रहक्रमः ॥ १० ॥
अजन्यता रसे प्रोक्ता यदि स्याज्जन्यता पुनः ।
निमित्तस्य विभावादेस्तदा नाशादनाशिता ॥ ११ ॥
निमित्तदण्डनाशेन घटनाशो न हि क्वचित् ।
विभावादिपरामर्शात्प्रागसिद्धो रसो यतः ॥ १२ ॥
अनुमातुं न शक्योऽस्ति तस्मान्न ज्ञाप्यता रसे ।
पूर्वसिद्धो व्याप्तिबलाद्वह्न्यादिर्ह्यनुमीयते ॥ १३ ॥
व्यञ्जितस्तु विभावाद्यैश्चर्वणीयो भवेद्रसः ।
अलौकिकविभावाद्यैर्व्यञ्जितस्य रसस्य यत् ॥ १४ ॥
अलौकिकत्वमाहुस्तद्भूषणं न तु दूषणम् ।
यच्चर्वणविनिष्पत्त्या निष्पत्तिरुपचर्यते ॥ १५ ॥
तस्माद्रसस्य कार्यत्वमुपचारेण कथ्यताम् ।
स्वसंवेदनवेद्यत्वाद्रसो ज्ञेयोऽपि कथ्यताम् ॥ १६ ॥
वैशिष्ट्यभाननियमाद्विभावप्रभृतेरिह ।
रसज्ञाने च तज्ज्ञानं तस्मान्नो निर्विकल्पकम् ॥ १७ ॥

स्वसंवेद्यत्वान्न तज्ज्ञानं स्वभिन्नसविकल्पकम् ।
उभयाभावरूपत्वमुभयात्मत्वमस्य च ॥ १८ ॥
लोकोत्तरचमत्कारकारित्वान्न विरोधिना ।
निर्विकल्पकता तस्य स्थायित्वसमये भवेत् ।
सविकल्पकता तस्य रसत्वसमये पुनः ॥ १९ ॥
अतो विरोधो नैवास्योभयाभावो भयात्मनः ।
केचिदाहुर्नटे पक्षे रामत्वारोपयोगिनि ॥ २० ॥
रसस्यानुमितिर्हेतुविभावाद्यैः सभासदाम् ।
तेषां मते भवेद्दोषः स पुनः श्रूयतां यथा ॥ २१ ॥
रसस्यानुमितेर्नास्ति चमत्कारः सभासदाम् ।
चन्दनानुमितिर्नैव कस्याप्याह्लादकारिणी ॥ २२ ॥
केचिन्नटगतो नैव नानुकार्यगतो रसः ।
किं तु काव्ये तथा नाट्ये भावकत्वाभिधेन च ॥ २३ ॥
व्यापारेण विभावादिसाधारण्यं प्रकुर्वताम् ।
साधारणीकृतः स्थायिभावः सामाजिकात्मनि ॥ २४ ॥
सत्त्वोद्रेकचिदानन्दविश्रान्तिसदृशेन च ।
भोगेन सचमत्कारमनुभूयत ऊचिरे ॥ २५ ॥
एतन्मते भवेद्दोषो व्यापारद्वयकल्पनम् ।
मिलितैस्तु विभावाद्यै रसोपस्थितिरिष्यते ॥ २६ ॥
एकैकस्मिन्विभावादौ तदन्यद्वययोः सति ।
आक्षेपेण रसोद्बोधो मिलितैस्तैरिति स्थितिः ॥ २७ ॥
असाधारण एकापि विभावादिर्भवेद्यदि ।
रसस्तदा न चाक्षेपः कष्टकल्पनदोषतः ॥ २८ ॥
साधारणो विभावादिर्यत्रैको द्वितयोऽथ वा ।
संनिबद्धो भवेत्तत्र विरोधान्न रसस्थितिः ॥ २९ ॥
आक्षेपापेक्षणं तत्र विरोधस्य विनाशकम् ।
भवेदेव रसोद्बोध इति कैश्चिन्निगद्यते ॥ ३० ॥

ननु करुणभयानकबीभत्सानां दुःखमयत्वाद्रसत्वं न स्यादिति चेन्न, काव्योपनिबद्धानां तेषां सुखमयत्वात् । यदि च तेषां दुःखमयत्वं स्यात्तदा तदुपस्थापके काव्यादौ न कोऽपि प्रवर्तेत, सचेतसां दुःखहेतौ प्रवृत्त्यभावदर्शनात् ।

यद्यपि दुःखहेतवो रामवनवासादयो न सुखोत्पादका भवितुमर्हन्ति, तथापि लौकिकास्ते लौकिकदुःखहेतवो भवन्ति । काव्ये नाट्ये पुनरलौकिकविभावादिशब्दवाच्यतां लभमानास्त एवालौकिकरसनिष्पादका भवन्तीत्यविरुद्धम् ।

किं च तेषामलौकिकत्वमिदमेव यद्दुःखकारणत्वेन प्रसिद्धानां काव्यादौ सुखोत्पादकता भवति । अन्यच्च दुःखहेतुभ्यो दुःखं सुखहेतुभ्यश्च सुखं जायत इति व्यवस्थितिर्लोक एव, न तु काव्यादाविति संक्षेपः ॥

सामान्यतो रसे ज्ञाते तद्विशेषजिज्ञासायां शृङ्गारादय एव विशेषा निरूप्या भवन्ति । अतस्त एव क्रमेण निरूप्यन्ते—

**शृङ्गं हि मन्मथोद्भेदस्तस्यागमनहेतुकः ।**
**उत्तमप्रकृतिः प्रायो रसः शृङ्गार उच्यते ॥ ३१ ॥**
**स्थायिभावो रतिर्यस्य स वा शृङ्गार उच्यते ।**
**वर्णः श्यामो भवेदस्य दैवतं विष्णुरुच्यते ॥ ३२ ॥**
**स्वकीया कन्यका वास्य नायिकालम्बनं मतम् ।**
**नायको दक्षिणादिस्तु तदालम्बनमिष्यते ॥ ३३ ॥**

यदि कन्यका शृङ्गाररसालम्बनं न स्यात्तदा सकलजनसिद्धस्य मालत्यादिरतिशृङ्गारस्याभासतापत्तेः । परोढायाः शृङ्गाररसस्यानालम्बनत्वे युक्तिं वक्ष्यामः ॥

**संभोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः ।**
**दर्शनस्पर्शनालापचुम्बनादिक्रियोद्भवम् ।**
**अन्योन्यं यत्सुखं यूनोः संभोगः स समीरितः ॥ ३४ ॥**

यद्यपि चुम्बनालिङ्गनादिक्रियाणामानन्त्येन संभोगस्य बहवो भेदा भ-

वितुमर्हन्ति, तथापि तत्संख्यां कर्तुमशक्यतया संभोगत्वमेकमुपाधिमादाय एक एव संभोगो गण्यते। स चादौ नारीगतो वर्णितः सन्नधिकहृदयंगमो भवति। तदुक्तम्—

'पूर्वं नारी भवेद्रक्ता पुमान्पश्चात्तदिङ्गितैः।' इति।

इङ्गितानि प्रागुक्तानि। स पुनः प्रथमं पुरुषगतो वर्ण्यते चेत्तदा दोषो न भवति। किं त्वस्य तादृशहृदयंगमत्वे संशयः।

यथा रासक्रीडायाम्—

लपन्ती मृदुस्मेरवक्त्राभिरामा क्षिपन्ती दृशौ दिक्षु लोले सकामा।
व्रजन्तीसमीपं हरिं गोपकन्या पुरस्तात्समुल्लासयामास धन्या॥ १॥

अत्र गोपकन्या आलम्बनम्। प्रकरणप्राप्तश्चन्द्र उद्दीपनम्। स्मेरेत्यादिना स्मितमनुभावः। दिक्प्रेक्षणादिना व्यञ्जिता शङ्का व्यभिचारी एतैरभिव्यक्तः सामाजिकरतिभावः शृङ्गाररसरूपतां भजते। विप्रलम्भं विना न संभोगः पुष्टिमाप्नोति। तदुक्तम्—

न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते।
काषायिते च वस्त्रादौ भूयान्रागोऽनुषज्जते॥' इति।

यथा—

कृष्णः कयापि सह संविलसन्निकामं
तन्मानकालमवगम्य तिरोबभूव।
मत्वाथ तां स गलदश्रु विनिश्वसन्ती-
माविर्भवन्पुरत एव पुनश्चुचुम्ब॥ २॥

पुष्टिः पुनरस्य रासक्रीडायां प्रागुदाहृतायां द्रष्टव्या॥

**भावो यत्र रतिर्नाम प्रकर्षमधिगच्छति।**
**नाधिगच्छति वाभीष्टं विप्रलम्भः स उच्यते॥ ३५॥**

प्रकर्षोऽत्र विभावादिसंबन्धः॥

**विप्रलम्भो बुधैः पञ्च प्रकाराः समुदीरिताः।**
**आद्योऽभिलाषहेतुः स्यादन्यो विरहहेतुकः॥ ३६॥**

**तृतीयः शापहेतुः स्यादीर्ष्याहेतुश्चतुर्थकः ।**
**प्रवासहेतुकः प्रोक्तः पञ्चमं शास्त्रवेदिभिः ॥ ३७ ॥**

क्रमेण यथा—

भूयादत्र सखे स कोऽपि समयो यत्रारविन्देक्षणां
मञ्जीवातुमिवेन्दुबन्धुवदनामालोकयेयं प्रियाम् ।
यस्याः क्रूरकटाक्षबाणनिवहैर्विद्धोऽधुनाहं पुन-
र्दीर्घश्वासशरीरतापसुलभां मूर्छां लभेऽनुक्षणम् ॥ ३ ॥

अत्राभिलाषहेतुकः ।

किं कस्मिन्नपि यौवने पथि रतो नैतद्विचारक्षमं
यत्सक्तं मयि तस्य मानसमहो कस्मादसौ नागतः ।
इत्थं चन्द्रमुखी विचिन्त्य दयितोदन्तं सबाष्पेक्षणा
दीर्घश्वाससमीरशुष्यदधरा दैवज्ञकं पृच्छति ॥ ४ ॥

अत्र विरहेणोत्कण्ठिताया विरहहेतुकः ।

नेत्रे संयोजिते पाण्डौ मद्रराजतनूजया ।
तद्गतः पाण्डुतां धत्ते शापपापमवाप्नुहि ॥ ५ ॥

अत्र माद्र्याः पाण्डोर्दर्शनं जायते । परंतु शापत्रासात् स्पर्शनादिरूपसंभोगो न भवतीति शापहेतुको विप्रलम्भः ।

चेन्नम्रीकुरुषे मुखं कुरु तदा किंचिन्न च ब्रूमहे
सोऽयं ते कठिने हनिष्यति हठं प्राप्तप्रसादो विधुः ।
मौनं चेद्भजसे तदा भज पुनर्लब्धावकाशा स्वयं
वाणीभिर्विवशां करिष्यति सखि त्वामद्य सद्यः पिकी ॥ ६ ॥

अत्रेर्ष्याहेतुकः ॥

**प्रवासो भिन्नदेशत्वमुक्तं तरुणयोर्बुधैः ।**
**भवन्भावी च भूतश्च प्रवासस्त्रिविधो मतः ॥ ३८ ॥**

भवन् यथा—

प्रस्थानहेतोर्भवतो विशुद्धा यात्राधुना ते न बभूव धीरः ।
यदेष धारानिकरेण वारामकालवर्षी नयनाम्बुदोऽस्याः ॥ ७ ॥

भावी यथा—

गच्छामीति प्रिय ब्रूहि मा यामीति कदाचन ।
स्मरणोपस्थिता यामी यातना बाधते ध्रुवम् ॥ ८ ॥

भूतो यथा—

स्वैरं स्वैरं गमनपदवीमागते शीतभानौ
दूरादेव क्षितिधरदरीमभ्यगादन्धकारः ।
तापस्तावन्निखिलजगतां वर्तुलीभूय भूयः
शङ्के पङ्केरुहदलदृशो मानसे निर्विवेश ॥ ९ ॥

यथा वा—

सुधांशुः संतापी न खलु ममता पीतवसने
शरैः कामो हन्ता प्रतिपलमहं तावदबला ।
शरत्सेयं जाता विकचजलजातालिविषमा
ममानर्थापातादिह जगति पाता भवतु कः ॥ १० ॥

एषु प्रवासहेतुकः ॥

**प्रवासे तनुवस्त्राणां मालिन्यं तनुता तथा ।**
**एकवेणीधरं मस्तं निश्वासरुदिते तथा ॥ ३९ ॥**
**उच्छ्वासो भूमिपतनं तथा कम्पादि जायते ।**
**अरुचिर्वस्तुवैराग्यं तापस्तु विरहज्वरः ॥ ४० ॥**
**असौष्ठवमनाय त्रिः(?) सर्वत्रारागिता धृतिः ।**
**शून्यता मानसस्य स्यादनालम्बनतापि च ।**
**तन्मयत्वं तत्प्रकाशो बाह्याभ्यन्तरतस्तथा ॥ ४१ ॥**

अन्यच्च—

**असौष्ठवं तनौ तापः पाण्डुता कृशतारुचिः ।**
**अनालम्बत्वमधृतिस्तन्मयोन्माद एव च ॥ ४२ ॥**
**मूर्च्छना च मृतिश्चैव दश स्मरदशा इह ।**
**पूर्वरागात्मको मानः प्रवासकरुणात्मकः ।**
**विप्रलम्भरसः कैश्चिच्चतुर्धा परिकीर्तितः ॥ ४३ ॥**

तत्र—

**दर्शनश्रवणाभ्यां यो यूनोरुत्पन्नरागयोः ।**
**दशाविशेषोऽप्राप्तौ स पूर्वरागः समीरितः ॥ ४४ ॥**
**स्वप्नेन्द्रजालचित्रेषु प्रोक्तं साक्षाच्च दर्शनम् ।**
**वयस्यावन्दिदूतादिमुखेभ्यः श्रवणं भवेत् ॥ ४५ ॥**
**अभिलाषः स्मृतिश्चिन्ता प्रलापो गुणकीर्तनम् ।**
**उन्मादो जडता व्याधिरुद्वेगो मृतिरेव च ॥ ४६ ॥**

इत्यत्र दश कामदशाः । उदाहरणं तु प्रागुक्तम् ॥

**रसभङ्गभिया नैव मृतिरत्र प्रवर्ण्यते ।**
**वर्ण्यते जातसदृशी चेतसावगता तथा ॥ ४७ ॥**

**क्रमेण यथा—**

आकर्ण्य मत्तमधुपावलिझांकृतानि
कष्टेन जीवमबला बत सा वहन्ती ।
पाटीरकाननसमीरमथानुभूय
किं वा भवेत्प्रियतमेति न निश्चिनोमि ॥ ११ ॥

कामः क्रूरशरैर्निहन्तु सकलं देहं सुधादीधिति-
र्दाहं मे वितनोतु षट्पदरवो निर्मातुकर्णज्वरम् ।
कुर्यान्मन्दतरं वहन्मरुदसौ मर्मव्यथां सर्वथा
प्राणाः पञ्चधराधरातिगुरवो निर्यातु निर्यान्तु मे ॥ १२ ॥

अदूरभाविप्रत्युज्जीवनरूपस्तृतीयो भेदो नात्रोदाहृतः युक्तिं तत्र वक्ष्यामः ।

'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥'

इति केचिद्वदन्ति ।

'पूर्वं नारी भवेद्रक्ता पुमान्पश्चात्—' इत्यादिना पूर्वरागः प्रथमं स्त्रिया

एव वर्णितश्चमत्काराधायक इति प्रायिकम् । संभवतः प्रथमं पुरुषानुरागस्य वर्णनेऽपि न कापि क्षितिः, तस्यापि चमत्कारित्वात् । किं तु विरलप्रचार इति विशेषः ॥

**त्रिधा कुसुम्भमञ्जिष्ठानीलीरागात्स भिद्यते ।**

स पूर्वरागस्त्रिविधो भवति—कुसुम्भरागः, मञ्जिष्ठारागः, नीलीरागश्चेति ॥

**कुसुम्भरागः स प्रोक्तः शोभते यश्च नश्यति ॥ ४८ ॥**
**मञ्जिष्ठाराग उक्तः स यो नापैत्यतिशोभते ।**
**नीलीरागोऽचलो व्यूढः सुशोभो रामसीतयोः ॥ ४९ ॥**

अथ मानः—

मानः कोपः । स च द्विविधः—ईर्ष्यामानः, प्रणयमानश्चेति भेदात्

**भर्तुरन्यप्रियासङ्गो दृश्यतेऽथानुमीयते ।**
**श्रूयते वा यदा स्त्रीणामीर्ष्यामानस्तदा भवेत् ॥ ५० ॥**

भर्तुरन्याबलासङ्गानुमितिः स्त्रीणां तदुत्स्वप्नायितगोत्रस्खलनभोगचिह्नैर्हेतुभिर्भवतीति ॥

**उपाया मानभङ्गाय षडेव परिकीर्तिताः ।**
**सामभेदश्च दानं च नत्युपेक्षे रसान्तरम् ॥ ५१ ॥**
**सामप्रियवचो भेदः सख्योपार्जनमुच्यते ।**
**भूषादेर्व्याजतो दानं पतनं पादयोर्नतिः ॥ ५२ ॥**
**परिक्षीणे तु सामादौ स्यादुपेक्षावधीरणम् ।**
**त्रासकौतुकहर्षादेरीर्ष्यानाशो रसान्तरम् ॥ ५३ ॥**

एषामुदाहरणमूह्यम् ।

**कौटिल्यगामिना प्रेम्णा कोपो यस्मादहेतुकः ।**
**यूनोः प्रणयमानः स प्रोक्तः सानन्दयोरपि ॥ ५४ ॥**

स च त्रिविधः—नायकगतः,नायिकागतः, तदुभयगतश्चेति । दिङ्मात्रमुदाह्रियते । यथा—

स्थितयोर्विमुखीभूय यूनोर्नतमुखाब्जयोः ।
अन्योन्यं वक्रितग्रीवं पश्यतोः कुपितं कुतः ॥ १३ ॥

एष उभयगतः । अस्य भेदस्यानुनयपर्यन्तासहत्वान्न विप्रलम्भत्वम्, किंतु संभोगव्यभिचारीर्ष्याभावत्वम् ।

यथा—

विनिवारितापि दृष्टिस्तत्र जने सखि पुनः पतति ।
वक्रोक्तिवचनसमये भवति पुनर्वाच्यविसरणम् ॥ १४ ॥

अथ प्रवासः । स तु प्रागुक्त एव ॥

अथ करुणविप्रलम्भाख्यः—

**एकतरस्मिन्यूनोर्निर्गतजीवे पुनर्लभ्ये ।**
**अथवेतरतनुलभ्ये भवेत्करुणविप्रलम्भाख्यः ॥ ५५ ॥**

उदाहरणं तु कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्तः । तत्र प्रथमं करुण एवाकाशवाणीश्रवणसमनन्तरमेव संगमप्रत्याशायां रतेरुद्भवात्करुणाख्यविप्रलम्भशृङ्गारः । न चायं प्रवासात्मको भेदः, संगमप्रत्याशानन्तरमेव भवतो विप्रलम्भशृङ्गारस्य तत्त्वादिति वाच्यम् । जीवतोर्यूनोरेव प्रवासो न त्वेकतरस्मिन्मृते मरणरूपविच्छित्तिविशेषात्तद्भिन्न एवायमिति । अत्र विचार्यते—पूर्वरागात्मकस्याभिलाषहेतुके विप्रलम्भे मानात्मकस्येर्ष्याहेतुके विप्रलम्भेऽन्तर्भावः । महाश्वेतापुण्डरीकवृत्तान्तस्तु शुद्धकरुणरसविषयो न तु विप्रलम्भशृङ्गारविषयः । रतेस्तु करुणव्यभिचारित्वेनोद्भासनात्, न तु विप्रलम्भस्थायित्वेन । अन्यथा—

'सतीव योषित्प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि'

इति निश्चयवत्याः सत्याः पत्यौ मृते विलापस्य विप्रलम्भशृङ्गारत्वापत्तिः । तत्रापि शरीरान्तरलभ्यत्वनिश्चयोऽस्तीति संक्षेपः ।

**हास्यो हासस्थायिभावः शुक्लः प्रमथदैवतः ।**
**ईषद्धसितं हसितं विहसितमपरं तथान्यदवहसितम् ।**
**अपहसितं पुनरतिशयहसितं हास्यस्य षड्भेदाः ॥ ५६ ॥**

ईषद्धसितं हसितं भवति मुखे शिष्टलोकस्य ।
मध्यमवदने विहसितमवहसितं चापि संभवतः ॥ ५७ ॥
अपहसितं पुनरतिशयहसितं नीचानने भवति ।
स्वनिष्ठपरनिष्ठत्वभेदाद्भेदा अमी द्विधा तेन ॥ ५८ ॥
तेन द्वादश भेदोऽयं रसो हास्यः समीरितः ॥ ५९ ॥

ईषद्धसितं स्वनिष्ठपरनिष्ठं चेत्यादिक्रमेण गणितो द्वादशभेदो हास्यः ।

अव्यक्तदशनं किंचिद्विकस्वरकपोलकम् ।
यत्किंचित्कुञ्चितापाङ्गमीषद्धसितमुच्यते ॥ ६० ॥
ईषत्संलक्ष्यदशनमुत्फुल्लवदनाम्बुजम् ।
प्रविकाशि कपोलं च हसितं गदितं बुधैः ॥ ६१ ॥
कुञ्चितास्यं विहसितं मञ्जुस्वानं विदुर्बुधाः ।
अवहसितं कुटिलाक्षं स्फुटितस्वनकुञ्चितग्रीवम् ।
उद्धतमुद्गतबाष्पं स्फुटतरनिस्वानमपहसितम् ॥ ६२ ॥
अत्युद्धतमतिबाष्पं स्फुटतरनिस्वानमतिहसितम् ।

स्वनिष्ठमीषद्धसितं यथा—

मुक्ताधिया पुटकीनीगतवारिबिन्दु-
माहर्तुमीरितकरः प्रथमं बभूव ।
पश्चाद्विलोक्य सरसं शयमम्बुयोगा-
दीषज्जहास सुजनो विकसत्कपोलः ॥ १५ ॥

स्वनिष्ठं परनिष्ठं चेषद्धसितं यथा—

कृष्णानुकारं विरचय्य राधा विधाय राधानुकृतिं मुकुन्दः ।
उभौ व्रजन्तौ पथि दृष्टवन्तावन्योन्यमव्यक्तरदं हसेते ॥ १६ ॥

परनिष्ठं हसितं यथा—

मध्येऽह्नि मेघपिहिता हिमधाम्नि भुक्त्वा
सुप्तोत्थितं द्विजवरं करनीतदर्भम् ।
संध्याभ्रमेण तदुपासनमाचरन्तं
दृष्ट्वा जहास विकसद्दशनालिधीरः ॥ १७ ॥

परनिष्ठं विहसितं यथा—

आदौ सुतोपनयनं विरचय्य पश्चा-
न्नक्षत्रराशिगुरुभास्करशुद्धिवार्ताम् ।
ज्योतिर्विदं द्विजवरः परिपृच्छ्यमानो
विद्यावता विहसितो मधुरस्वनाद्यम् ॥ १८ ॥

एवमन्यदप्यूहनीयम् ॥

**यमदैवतस्तु करुणः शोकस्थायी कपोतवर्णः स्यात् ॥ ६३ ॥**

यथा—

शक्त्या विद्धं समिति पतितं लक्ष्मण त्वां समीक्ष्य
व्यातन्वानः स्तनितनिकरच्छद्मनाक्रन्दमुच्चैः ।
विद्युद्व्याजादयमपि घनः पश्य संतापवह्निं
बिभ्रद्बाष्पं त्यजति नितरां वारिधाराच्छलेन ॥ १९ ॥

**रक्तः क्रोधः स्थायिभावो रौद्रो रुद्राधिदैवतः ॥ ६४ ॥**

यथा—

उत्क्षिप्योच्चैः सकलसलिलान्यम्बुराशेः कराभ्यां
सेनामेनां गमनसरणिं दर्शयन्नेत्य लङ्काम् ।
गाढं बद्धभ्रूकुटिकुटिलो राक्षसाधीशवक्षः
सोऽहं हेलाविजितपविना मुष्टिना स्फोटयामि ॥ २० ॥

**रौद्रस्य भेदिका युद्धवीरादीक्षणरक्तता ।**
**उत्साहस्थायिभावस्तु स्वर्णाभः शक्रदैवतः ॥ ६५ ॥**
**उत्तमप्रकृतिर्वीररसो निगदितो बुधैः ।**
**युद्धदानदयाभेदात्त्रिविधो वीर ईरितः ॥ ६६ ॥**

युद्धवीरो यथा—

पुत्रभ्रातृसुहृद्गणैः सह समायातं रणे रावणं
कोषोत्पाटितचन्द्रहासरुचिभिर्विध्वंसयन्तं तमः ।
तं दृष्ट्वा पुलकोच्चयाञ्चिततनुः सद्यः प्रमोदोद्भव-
द्बाष्पौघेन परिप्लुतां रघुपतिश्चिक्षेप चापे दृशम् ॥ २१ ॥

दानवीरो यथा—

पश्यन्वामनरूपिणं क्षितिसुरं वैरोचनिः कौतुक-
व्यग्रान्तःकरणो न तस्य सहसा सस्मार संभाषणम् ।
मह्यं देहि पदप्रमाणधरणीमित्युक्तिकर्त्रे पुन-
स्तस्मै लोचनयोः प्रमोदसलिलव्याजेन सोऽर्धं ददौ ॥ २२ ॥

दयावीरो यथा—

कण्ठान्तिकं यावदुपैति कृष्णनामार्तिभाजः करटीश्वरस्य ।
तावन्महाकोमलमानसस्तं ग्राहाननान्मोचयति स्म कृष्णः ॥ २३ ॥

**उत्साहस्थायिभावत्वाद्भिन्नोऽयं करुणाद्रसः ।**

अयं दयावीरः करुणे शोकः स्थायिभाव इति भावः ।

**कालाधिदैवतः स्थायिभावभीतिर्भयानकः ॥ ६७ ॥**
**नारी नीचप्रकृतिकः कृष्णवर्णः स चेरितः ।**

यथा—

करी शोणे समुद्वीक्ष्य कण्ठीरवशिशोर्दृशौ ।
परिशुष्यन्मदश्चक्रे पलायितुमुपक्रमम् ॥ २४ ॥

**नीलीवर्णो महाकालो दैवतं यस्य भण्यते ॥ ६८ ॥**
**जुगुप्सास्थायिभावस्तु स बीभत्सरसः स्मृतः ।**

यथा—

संध्यापयोदपललं समुदीक्ष्य दूरा-
त्तारास्थिखण्डपटलं च नभो विकीर्णम् ।
जानीमहे निखिलदिग्वनिताः पिधातुं
प्रारेभिरे निजमुखानि तमोंऽशुकेन ॥ २५ ॥

**विस्मयस्थायिभावो यो दैवतं यस्य मन्मथः ॥ ६९ ॥**
**यस्य पीतो भवेद्वर्णः कथितः सोऽद्भुतो रसः ।**

यथा—

दंष्ट्राकोटिप्रविष्टक्षितिधरणिधरव्यूहनिष्पातलोक-
व्यक्तव्यालोपशङ्कानिवृततरपरित्यक्तनिश्वासवातः ।

बालाग्राविद्धताराागणजनितलसन्मौक्तिकश्रेणिबुद्धि-
दुष्टद्रोहव्रती वः कलयतु कुशलं कोऽपि कोलावतारः ॥ २६ ॥

**शान्तः शमस्थायिभावः कुन्देन्दुधवलद्युतिः ॥ ७० ॥**
**उत्तमप्रकृतिः प्रोक्तः श्रीनारायणदैवतः ।**

यथा—

मुरारे कंसारे भवजलधितारे हिततरे
हरे शौरे लक्ष्मीरमण रघुवीरेति जपतः ।
समीकृत्य प्रेक्षां जगति सकले संकलयतः
कदा गोदातीरे कथय मम यास्यन्ति दिवसाः ॥ २७ ॥

अथ स्थायिभावदृष्टयः—

**स्निग्धा हृष्टा तथा दीना क्रुद्धा दीप्ता भयातुरा ॥ ७१ ॥**
**जुगुप्सिता विस्मिता च शान्ता च नव दृष्टयः ।**
**शून्या च मलिना श्रान्ता लज्जिता शङ्किता तथा ॥ ७२ ॥**
**मुकुला चार्धमुकुला ग्लाना जिह्मा च कुञ्चिता ।**
**क्रुद्धा वितर्किता च स्यादभितप्ता तथैव च ॥ ७३ ॥**
**विषण्णा च भवेदन्या ललिता केकरा तथा ।**
**विकोषा विच्युता त्रस्ता मदिरा चेति विंशतिः ॥ ७४ ॥**

अथ रसदृष्टयः—

**कान्ता हास्या च करुणा रौद्री वीरा भयानका ।**
**बीभत्सा चाद्भुता शान्ता नव स्यू रसदृष्टयः ॥ ७५॥**
**अर्धप्रकाशिता सुप्ता घूर्णिता कूणितालसा ।**
**विवर्तिता विकसिता वर्तिता चार्धनर्तिताः ।**
**पर्यस्ता स्तिमिता चैव शून्येत्याद्यास्तु दृष्टयः ॥ ७६ ॥**

अर्धनर्तिता यथा—

कान्ते किंचिदुदञ्चयाक्षियुगलं कञ्जायतं जायतां
खेलत्खञ्जनचण्डताण्डवसमारम्भैर्नभो मण्डितम् ।

दूरादुन्नमयाननेन्दुमवनीभूषायिते भ्रूलते
भूयांल्लोकपथावलोकदमनं विष्वग्विदीर्णं तमः ॥ २८ ॥

अन्या अप्येवमुदाहरणीयाः।

अथ रसाभासः—

**एकस्या एव कामिन्या अनेकपुरुषे रतिः।**
**रसाभासः स्मृतो धीरैरनौचित्यप्रवर्तितः ॥ ७७ ॥**

परस्त्रीविषयतया श्रोतॄणामधर्मपरिणामेन वैरस्याधायकत्वमत्रानौचित्यम्।

यथा—

स्नातं केन सितासिते भवति ते तापस्तनौ यं विना
तुष्टः कस्य महेश्वरो विधुमुखि द्रष्टुं यमाकाङ्क्षसि।
तीव्रं केन कृतं तपस्तव मनो यच्चिन्तया न स्थिरं
पादौ केन निषेवितौ यदुपतेर्यत्तु त्वमालिङ्गसि ॥ २९ ॥

अत्रानेकक्रियोपादानेनानेकविषया रतिः प्रतीयते ॥

यद्यपि परकीयायां न रसाभासः स्वीयायामिव तद्वर्णनं निर्विगानं महाकविभिः क्रियते। तच्चमत्कारोऽपि तादृश एव। तथापि ममैवेयमहमस्या एवेति स्नेहाख्या रतिः, सा च परकीयायामाभासस्वरूपैव भ्रमत्वात्।

चमत्कारस्तु रसाभासादपि जायते। अन्यथा परकीयावर्णने न कोऽपि प्रवर्तेत। एवमेव वक्ष्यमाणभावाभासस्य समाधिर्बोद्धव्यः।

यत्राङ्गाङ्गिभावापत्तौ रसौ तत्र रससंकरः। तमाह—

यथा—

विधाय दिव्यं निजरूपमुच्चैर्विनिक्षिपन्ती नयने सलीलम्।
पुरोगतां शूर्पनखां विलोक्य जहास धीरध्वनिरामभद्रः ॥ ३० ॥

अत्र हास्यस्याङ्गं शृङ्गारः।

व्याप्तां विलोक्य मधुकैटभदानवेन्द्र-
भेदः प्रवाहपटलैर्धरणी समस्ताम्।

वैमानिकाः पुलकपुञ्जपरीतगात्रा
नेत्रप्रकाशसहिताः स्थगिता बभूवुः ॥ ३१ ॥

अत्राद्भुतस्य बीभत्सोऽङ्गम् ॥

अरुणनयनभासा भीषणे जामदग्न्ये
कलयति करपद्मे तीक्ष्णधारं कुठारम् ।
वपुरविदितपीडं बालकं वीक्ष्य रामं
दशरथनरपालो निश्वसन्मोहमाप ॥ ३२ ॥

अत्र करुणस्य रौद्रोऽङ्गम् ॥

कालीरदालिपरिचर्वितरक्तबीज-
देहास्थिखण्डपटलोत्थितशब्दमुच्चैः ।
आकर्ण्य लोचनविनिर्गतवारिधारा
जग्मुः सुरा भगवतः शरणं मुरारेः ॥ ३३ ॥

अत्र भयानकस्य बीभत्सोऽङ्गम् ॥

अत्र केचिद्रसानां जन्यजनकभावं वदन्ति । तदाह भरतः—

'शृङ्गारात्तु भवेद्धासो रौद्राच्च करुणो रसः ।
बीभत्सादद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ॥'

अयमुत्सर्गः इतरेषामपि रसानां कार्यकारणभावो बोध्यः । वस्तुतस्तु जन्यजनकभाव इत्यस्यार्थः । पोष्यपोषकभाव इति रसानामजन्यत्वव्यवस्थापनात् । यत्र रसो गौणः स रसवदलंकारस्योदाहरणमिदमेव ।

अथ रसानां परस्परविरोधमाह—

तत्र भरतः—

'ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥'

केचित्तु—

**आद्यः करुणबीभत्सरौद्रवीरभयानकैः ।**
**भयानकेन करुणेनापि हास्यो विरोधभाक् ॥ ७८ ॥**

**करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः ।**
**रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि ॥ ७९ ॥**
**भयानकेन शान्तेन तथा वीररसः स्मृतः ।**
**शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः ॥ ८० ॥**
**शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः ।**
**शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता ॥ ८१ ॥**

आद्यः श्रृङ्गार इत्याहुः । यथा रसानां परस्परविरोधः, तथा वैरिरसविभावानुभावव्यभिचारिणामपि रसविरोधो ज्ञेयः ।

**अङ्गाङ्गिभावमापन्नावेकदापि न वैरिणौ ।**

रसाविति शेषः ।

यथा—

कामेनालिङ्ग्यमानाया रदेन परिखण्डिते ।
अधरे मृगनेत्राया रुधिरं यावकायते ॥ ३४ ॥

अत्र शृङ्गारबीभत्सौ न रसहानिकरौ ।

**रसयोर्देशभेदेऽपि न विरोधो विरुद्धयोः ॥ ८२ ॥**

यथा—

एकं सीतामुखे न्यस्तमपरं रक्तसंचिते ।
गतासौ रावणे द्वे वः शिवे स्तां रामचक्षुषी ॥ ३५ ॥

अत्र शृङ्गारबीभत्सयोर्न विरोधः ॥

**विरुद्धानां न वैरं स्यात्कचित्समयभेदतः ।**

यथा—

राधाचक्रमभेदि सा द्रुपदजा लब्धा वने शोच्यव-
भ्रान्तं मांसमभोजि चान्नरहितं क्लीबत्वमासादितम् ।
स्वर्गे देहवता गतं विरचितं तीव्रं तपो बिभ्यता
क्रुद्धं धर्मसुताय किं न विहितं पार्थेन कीर्त्यर्थिना ॥ ३६ ॥

अत्र वीरशृङ्गारकरुणबीभत्सहास्याद्भुतशान्तभयानकरौद्राणां न विरोधः । रससबलतोदाहरणमेतदेव ज्ञेयम् ।

**सत्यङ्गयोर्विरोधेऽपि रसहानिर्न दृश्यते ॥ ८२ ॥**

यथा—

छद्मद्यूते वीक्ष्य गान्धारभर्तुः शोच्यावस्था धर्मसूनोर्विदित्वा ।
भीमो बद्धभ्रूविकारोऽरुणाक्षो हन्तुं सर्वानुद्यतो धार्तराष्ट्रान् ॥ ३७ ॥

अत्र हास्यकरुणयोर्वैरेऽपि रौद्राङ्गत्वेन न रसहानिः ।

वस्तुतस्तु वैरं तत्र यत्र रसयोः समं प्राधान्यम् । यत्र पुनरङ्गत्वेनाङ्गाङ्गत्वेन वा विरोधिनो रसयोर्भानं तत्र तत्र विरोधः । अनौचित्यं तु न वर्णनीयम् । उक्तं हि प्राचीनैः—

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥' इति ।

**बाध्यत्वेनोदितो वैरी संचार्यादिर्न दोषभाक् ।**

आदिशब्दादनुभावविभावौ । यथा—

संन्यासो वरमत्र मे विधुमुखी जायेत नेत्रातिथि-
श्चन्द्रं चूर्णय तप्तकाञ्चनलतातुल्यं तदीयं वपुः ।
काहं कुत्र पयोधरः खलवचो दुर्वारमाचक्षते
चाञ्चल्यं त्यज चित्त चञ्चलदृशोऽवस्था भवेत्कीदृशी ॥ ३८ ॥

अत्र निर्वेदौत्सुक्यामर्षस्मृतिवितर्कशङ्काधृतिचिन्तानां वैराग्यहेतूनामपि बाध्यत्वावगमाच्छृङ्गाराविरोधिनां भवेत्कीदृशीति चिन्तायामेव विश्रामः ।

मुहुर्मुहुः कम्पमानं कृशं पाण्डु वपुस्तव ।
कथयत्यत्र तत्त्वं गिरोऽङ्ग कंचिद्भवद्गतम् ॥ ३९ ॥

अत्र रामानुभावानां कम्पकार्श्यादीनां बाध्यत्वेनोपात्तानामनुपात्तानां वा प्रकृतरससाधारण्यान्न रसविघातकता ।

यत्र त्वनुभावस्यासाधारण्यं तत्र बाध्यत्वानवगमे दोषः । यथा—

ममास्ति सर्वथा तन्वि सर्वत्र समदृष्टिता ।
परिहृत्य दृढं मानं प्रयच्छालिङ्गनानि मे ॥ ४० ॥

इत्यादि शान्तानुभावस्य शृङ्गारविरुद्धस्य शृङ्गारे वर्णनमनुचितम् ।

सरोजनयनाः सौम्याः सत्यं सौम्यास्तु संपदः ।
मृणाली लतिकातन्तु नश्वरं किंतु जीवनम् ॥ ४१ ॥

अत्र जीवनास्थैर्यं शान्तमेव पुष्णातीत्यतो बोध्यत्वेनोक्तः शृङ्गारविभावस्तमेव पुष्णाति । तथा चात्र विरुद्धविभावोपादाने न दोषः ।

**व्यभिचारी रसान्मुख्यो देवादिविषयोपि च ॥ ८४ ॥**
**रतिर्देवादिविषया भावः प्रोक्तो मनीषिभिः ।**

सर्वत्र रसभावयोर्नियता स्थितिः । तदुक्तम्—

'न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिरनयो रसभावयोः ॥' इति ।

रसानुचरी व्यभिचारी यत्र प्राधान्येनाभिव्यज्यते तत्र रसो गौणः । व्यभिचारी मुख्यः राजानुगतराजभृत्यवत् ।

देवादिविषयश्च भावपदवाच्यः । देवादिविषया रतिर्भावपदवाच्या । तत्र भावशान्ति-भावोदय-भावशबलता-भावसंधिभेदान्मुख्यश्चतुर्विधः । क्रमेण यथा—

कान्ते पदान्तपतिते विनिबद्धमौना
नेयं प्रसादमकरोत्कमलायताक्षी ।
अत्रान्तरे जलधरध्वनिभीतभाजा-
श्लिष्टस्तथा स खलु जीवपतिः सकम्पम् ॥ ४२ ॥

अत्रेर्ष्याख्यव्यभिचारिभावस्य शान्तिः ।

भावी कालः स खलु तृषितं हन्त चक्षुश्चकोरं
श्रीकृष्णस्यामृतकररुचिं पाययिष्यामि यत्र ।
इत्थं चित्ते कुवलयदृशश्चिन्तयन्त्यास्तदानीं
प्राप्ते तस्मिन्नयनयुगलं नम्रतामाससाद ॥ ४३ ॥

अत्र व्रीडाया उदयः ॥

श्वश्रूरिङ्गितवेत्री कथयति मिथ्यैव दुर्वादम् ।
त्वरयति मामिह मधुरिपुमुरलीनिनदो निकुञ्जगमनाय ॥ ४४ ॥

अत्र शङ्कौत्सुक्ययोः संधिः । उपमर्द्योपमर्दकभावाभावादनयोर्भावशबलतायां नातिव्याप्तिः ।

संन्यासो वरमत्र मे विधुमुखि जायेत नेत्रातिथि-
श्चन्द्रं चूर्णय तप्तकाञ्चनलतातुल्यं तदीयं वपुः ।
क्वाहं कुत्र पयोधरः खलवचो दुर्वारमाचक्षते
चाञ्चल्यं त्यज चित्त चञ्चलदृशोऽवस्था भवेत्कीदृशी ॥ ४५ ॥

अत्र निर्वेदौत्सुक्यामर्षस्मृतिवितर्कशङ्काधृतिचिन्तानां शबलता ॥

देवविषयो व्यभिचारी यथा—

उपायातस्तल्पं मम कुसुमकल्पं मधुरिपुः
समारेभे वाचा मधुरसमुचा चाटुशतकम् ।
अथारब्धे माने सहचरि मयानेककपटा-
द्विधाता मन्निद्रामहरत तदानीमसहनः ॥ ४६ ॥

अत्र विधिं प्रत्यसूया भावपदवाच्या । एवं मुनिगुर्वादिविषयेऽप्युदाहरणीयम् ।

देवविषया रतिर्यथा—

मुरलीसंवलितकरे ललिततरे दीनदुःखहरे ।
नवनीरदकान्तिधरे मानस रे निश्चलं भूयाः ॥ ४७ ॥

अत्र कृष्णविषया रतिर्भावः ॥

अथ भावाभासाः—

पीनस्तनी कमलपत्रसमाननेत्रा
संपूर्णशीतकरचारुमुखी नताङ्गी ।
अङ्गीकरिष्यति कदापि मदीयमैत्री-
मित्याकुलो नयति वासरमेष मूर्खः ॥ ४८ ॥

अत्र चिन्ता । यथा वा—

इयं कमलपत्राक्षी पश्यति त्वामितस्ततः ।
तथापि प्रेम नाधत्से सेव्यतां मूढ मन्मथः ॥ ४९ ॥

अत्र नायिकागतौत्सुक्यम् ॥

नृपविषयो भावाभासो यथा—

पृथिवीपाल यत्रैतां राजन् जीयाः शतं समाः ।
त्वां परित्यज्य गच्छामि यत्रास्ति भवनं मम ॥ ५० ॥

अत्र निरपराधे राज्ञि कस्यचिदमर्षो भावाभासः । एवं देवादौ ज्ञेयम् ।

अथ नवानां रसाभासानामालम्बनानि—

**गुरुपत्नी मुनेः पत्नी परकीयोपनागरः ॥ ८५ ॥**
**प्रतिनायक एवास्या बहवो वल्लभाः पुनः ।**
**एकाश्रितरतिर्योषित्पुमान्वा भिल्ल तत्प्रियाः ॥ ८६ ॥**
**तिर्यगादिश्च शृङ्गाराभासस्यालम्बनानि च ।**

भिल्ल इत्युपलक्षणं किरातादयो ज्ञेयाः । आदिपदात्तापसादयः ।

**हास्याभासे च गुर्वादिः शत्रुः स्यात्करुणात्मके ॥ ८७ ॥**
**रौद्राभासे च गुर्वादिर्वीराभासे द्विजोत्तमः ।**
**तथा भयानकाभासे ज्ञेय उत्तमनायकः ॥ ८८ ॥**
**बीभत्से वस्तु श्रद्धेयमद्भुते निशयोज्झितः ।**
**शान्ताभासे जनो हीन आभासालम्बनानि वै ॥ ८९ ॥**

दिङ्मात्रमुदाह्रियते—

बहुषु नायकेषु यथा—

त एव पुरुषा धन्या वसन्ति भुवनत्रये ।
येषां कृते सरोजाक्षि समुत्पतति ते मनः ॥ ५१ ॥

एवमेवान्येषामुदाहरणीयमिति ।

**तैरभुक्तेन धीरेण गङ्गानन्देन निर्मितम् ।**
**सरस्वतीवतंसाय स्पर्द्धते कर्णभूषणम् ॥ ९० ॥**
**अनधीत्य रसग्रन्थं निखिलं कर्णभूषणे ।**
**दूषणं धीरमादेयमिति मे विनिवेदनम् ॥ ९१ ॥**

इति श्रीमहाराजाधिराज**श्रीकर्णसिंह**कारिते मैथिल**श्रीगङ्गानन्द**कविराजविरचिते **कर्णभूषणे** रसनिरूपणो नाम पञ्चमः परिच्छेदः ।

**समाप्तं चैतत्कर्णभूषणम् ।**